Ishq mera mazhab hai. Rasna Mera Drink Hai.



Yesterday at my school drama, I was like Amitabh Bachchan as in 'Khuda Gawah'. And everyone clapped and applauded. And when I came home you know what Mummy asked? 'So little ustaad, what do you want to drink?' You know what I said? 'Ishq mera mazhab hai, Rasna Mera Drink Hai.' And then I drank up the whole jug of pyaara Rasna...








I Love You Rasna

More Taste — More Fun

Mudra: EAMR: 6641

कविहृदयम्–

# जीवनलक्ष्यम्

वेदस्याध्ययनं कृतं परिचितं शास्त्रं पुराणं स्मृतम्
सर्वं व्यर्थमिदं पदं न कमलाकान्तस्य चेत्कीर्तितम्।
उत्खातं सदृशीकृतं विरचितः सेकोऽम्भसा भूयसा
सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि॥

– सुभाषितरत्नभाण्डागारम्

भक्ताग्रेसरः कविः कश्चन वदति– "भूमौ खननं कृत्वा आलवालं रचयित्वा जलसेचनम् अपि यदि क्रियते, बीजावापः एव विस्मर्यते तर्हि किमपि फलं न प्राप्यते खलु? तद्वत् वेद-शास्त्र-पुराणादीनाम् अध्ययनं कृत्वापि देवस्य कीर्तनं न कृतं चेत् प्रयोजनं किमपि नास्ति" इति।

सद्गतिप्राप्त्यर्थं भगवद्ध्यानं यथा लक्ष्यं तथा व्यावहारिके जीवने अपि किमपि लक्ष्यं स्यात्। लोके बहूनां जीवनं लक्ष्यरहितं भवति प्रायः। जीवनस्य किं तात्पर्यम् इति न जानन्ति ते। यतः दिनस्य अनन्तरं दिनानि आगच्छन्ति अतः जीवन्ति ते।

पामराः तु अज्ञानेन ग्रस्ताः भवन्ति। अतः तेषां जीवनं निरुद्देशं चेत् न तत्र आश्चर्यम्। निर्धनानां तु उदरम्भरणम् एव समस्यायै भवति इत्यतः जीवनोद्देशविषये चिन्तयितुं न अर्हन्ति ते। किन्तु ये विद्यावन्तः, येषां च उदरम्भरणं न क्लेशाय ते अपि जीवनोद्देशविषये न चिन्तयन्ति इति तु खेदावहः विषयः। केषाञ्चित् जीवने अर्थसम्पादनम् एव प्रधानं लक्ष्यं भवति। सुखमरीचिकया वञ्चिताः ते। यावत् स्वानुभवात् तैः विवेकः प्राप्यते तावता मार्गान्तरस्य आश्रयणार्थं कालः अपि अतीतः भवति। अतः तादृशानां जीवनं शोकपात्रं भवति।

एवं तर्हि जीवनस्य लक्ष्यं कीदृशं स्यात्? महत् एव लक्ष्यं सर्वेषां जीवने स्यात् इति न वदामः वयम्। उदात्तः अल्पः अपि विषयः जीवनलक्ष्यं भवितुम् अर्हति। परोपकारः, उपेक्षितजनसेवा, शिक्षणं, संस्कारप्रदानम्, शास्त्रादिसारबोधनम् आचारादिशिक्षणम् इत्यादयः सर्वे अपि विषयाः लक्ष्याणि भवितुम् अर्हन्ति। स्वसामर्थ्यं विचिन्त्य कश्चन विषयः लक्ष्यत्वेन स्वीकरणीयः! लक्ष्यस्य साधनार्थं यथाशक्ति श्रमः करणीयः च। एवं कृतं चेदेव जीवने तृप्तिः। अन्यथा वैयर्थ्यबुद्धिः, निराशा, खेदः च अपरिहार्यः।

# उदरवेदना आगता आसीत्

| | |
|---|---|
| आचार्यः– किं रे धीरेन्द्र! ह्यः किमर्थं विद्यालयं न आगतवान् भवान्?। | Hi, Dhirendra, you didn't come to school yesterday, why? |
| धीरेन्द्रः – ह्यः उदरवेदनया पीडितः आसम्। | I suffered from stomach-ache yesterday. |
| आ –वस्तुतः अपि उदरवेदना आसीत्, उत अनुपस्थितेः व्याजः कोऽपि कल्प्यते? | You really had stomach-ache or was it an excuse invented for not coming to school? |
| धी –वस्तुतः अपि उदरवेदना आसीत्। | I really had stomach-ache, sir. |
| आ – अस्तु रोदनं मास्तु। अद्य उदरवेदना अस्ति वा? ह्यः औषधं किं स्वीकृतवान्? | OK. Don't weep. How is the stomach-ache? You took some medicine? |
| धी –मम पितामही कमपि कषायं निर्माय दत्तवती। ततः घण्टाभ्यन्तरे वेदना उपशान्ता। | My grandmother made an extract and gave it to me. That cured the stomach-ache in an hour. |
| आ –इतः पूर्वं कदाचित् एवम् उदरवेदना आगता आसीत् वा? | You had such stomach-ache before? |
| धी –एतस्मिन् वर्षे इतः पूर्वं द्विवारम् एतादृशी एव वेदना आगता आसीत्। | I had it twice earlier this year. |
| आ –तर्हि परिणतस्य वैद्यस्य दर्शनं वरं खलु? | If it is so, would it not be good for you to see a good doctor? |
| धी –आम्। मम पिता मां चिकित्सालयं नेष्यामि इति उक्तवान्। | My father has told me that he will take me to the hospital. |
| आ –तदेव वरम्। अद्य कक्ष्यायाम् उपवेष्टुं शक्नोति वा भवान्? | That is fine. Are you able to sit now? |
| धी –चिन्ता नास्ति श्रीमन्! अद्य स्वस्थः अस्मि। | It is all right, sir. I feel better today. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अचिरात् - | Shortly | नारिकेलम् - | Coconut |
| अतीतः - | Was over | निरस्तपादपः - | Land without vegetation |
| अनुष्ठितम् - | Was done | निवेश्य - | Having placed |
| अनूदितवान् - | Translated | पर्यवेक्षकः - | Supervisor |
| अर्चकः - | Priest | पाञ्चालिका - | Doll |
| अवधानम् - | Attention | पितामही - | Paternal grandmother |
| आमृष्टवती - | Stroked | पिपासा - | Thirst |
| एरण्डः - | Castor plant | प्रादेशिकभाषा - | Regional language |
| कशा - | Whip | बकः - | The Indian Crane |
| कागदम् - | Paper | भषति - | Barks |
| कुट्टितवान् - | Pounded | मन्दभाग्या - | Unfortunate |
| क्वचित् - | Sometime or somewhere | मृदुला - | Soft |
| खुरपुटध्वनिः - | Sound of horse's hoofs | यापयति - | Spends (time) |
| घट्टनम् - | Collide | युगपत् - | At one time |
| चित्ररासभः - | Mule | विधूय - | Having shaken |
| जवनिका - | Curtain | वृकः - | Wolf |
| जुगुप्सा - | Disgust | शम्बूकः - | Snail |
| दिनदर्शिका - | Calendar | शैवालम् - | Lichens |
| द्रुमायते - | Becomes tree-like | सध्यानम् - | With great attention |



# चन्दमामा

मे-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'

## पौरनीतिशिक्षणार्थम् उचितः कालः

केभ्यश्चित् मासेभ्यः पूर्वं कदाचित् फ्रान्सुदेशीयाः कोटिशः छात्राः नित्योपयोगिभिः पाठ्यपुस्तकैः सह यथाशक्ति तण्डुलान् अपि नीतवन्तः। तस्मिन् दिने समग्रे फ्रान्सुदेशे आहत्य ४,३०० टनूमितः तण्डुलः सङ्गृहीतः। एवं सङ्गृहीतः तण्डुलः धनराशिः च क्षामपीडितेभ्यः सोमालियादेशस्य बालकेभ्यः प्रेषितः।

सोमालियादेशस्य करुणकथां प्रायः वयं जानीयाम। केभ्यश्चित् वर्षेभ्यः पूर्वम् आफ्रिकादेशेषु चतुर्दशगणीयाः गोरिल्लाजनाः अन्तर्विरोधम् आरब्धवन्तः। तदा न केवलं सहस्रशः जनाः मृताः, अपि तु बहवः गृहनाशम् आरोग्यनाशं च प्राप्तवन्तः। पुनर्बहवः पार्श्ववर्तिनम् इथियोपियादेशं गतवन्तः। ये देशे अवशिष्टाः ते क्षामग्रस्ताः सन्तः मरणोन्मुखाः अभवन्।

एषा वार्ता यदा ज्ञाता तदा प्रपञ्चस्य बहवः देशाः साहाय्यं कर्तुम् अग्रे आगताः। संयुक्तराष्ट्रसंघसदस्याः केचन देशाः कलहमग्नैः गणैः सह वार्तालापम् अपि कृतवन्तः। एतद्देशीयाः छात्राः च सोमालियाच्छात्राणां निमित्तं १०,००० टनूमितः तण्डुलः सङ्ग्रहणीयः इति निश्चित्य कार्यप्रवृत्ताः अभवन्।

फ्रान्सुदेशीयानां छात्राणां प्रतिक्रिया अनुकरणार्हा आसीत्। मानवीयप्रक्रियामन्त्री बेनार्ड् कौचूनर् एतद्विषये एवम् उक्तवान्– "पौरनीतिशिक्षणस्य अपूर्वम् उदाहरणम् एतत्। समष्टिदायित्वविभागः, समष्टिचिन्तनम्, सम्भूय कार्यं च कथम् इति छात्रैः स्वानुभवात् एव सम्यक् अवगतम्" इति।

फ्रान्सुबालकाः यथा कृतवन्तः तथा अस्मद्देशीयाः यथा कुर्युः तथा कर्तुं बहवः अवकाशाः प्राप्ताः आसन्। तादृशे सन्दर्भे विद्यालयैः पालकैः वा किं पौरनीतिः बोधिता? किं केचन वा बालाः दौर्भाग्यशालिनां सहोदराणां साहाय्यं कर्तुं स्वयम् उद्युक्ताः अभवन्?

समग्रे भारते इदानीं बालानां ग्रीष्मकालीनः विरामः। पूर्वम् उक्ताः विचाराः, क्षामपीडितानां, भाग्यहीनानां, दीनानां छात्राणां साहाय्यार्थं सन्तोषार्थं च अस्मद्देशीयाः छात्राः यथा चिन्तयेयुः तथा कुर्युः वा?

सम्पुटः–१०  मे–१९९३  सञ्चिका–२

प्रतिकृतिमूल्यं रू. ४-००  •  वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नामनिर्वचनम्-५

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**हेरम्बः–** हे शिवे रम्बते (शब्दं करोति) रणे रम्बते इति वा हेरम्बः। [रबि(शब्दे) +अच्।] यः रणाङ्गणे पितुः समीपे वा शब्दं करोति सः हेरम्बः। रणाङ्गणे वीराः शौर्येण हूङ्कारं कुर्वन्ति। शिवस्य पुत्रः गणपतिः रणे शूरः। अतः सः रणे शौर्येण शब्दं करोति। अतः सः हेरम्बः।

शौर्येण कृतं गर्जनम् अपि क्वचित् हेरम्बशब्देन उक्तः। महिषः इति अप्रसिद्धः अपि कश्चन अर्थः अस्ति हेरम्बशब्दस्य। तथा च कोषः– 'हेरम्बो विघ्नराजे स्यात् महिषे शौर्यगर्जिते'– मेदिनी।

**नन्दिनी–** [(टु) नदि(समृद्धौ)+णिनिः+ङीप्] नन्दयति=सन्तोषयति। या सर्वान् नन्दयति सा नन्दिनी। पार्वत्याः अपरं नाम नन्दिनी इति। वसिष्ठस्य होमधेनुः नन्दिनी लोके नितरां प्रसिद्धा। गङ्गा, ननान्दा, पुत्री इति त्रयः अप्रसिद्धाः अपि अर्थाः सन्ति एतस्य एव पदस्य। तथा च कोषः– 'नन्दिन्युमायां गङ्गायां ननन्दृधेनुभेदयोः'– मेदिनी।

**अनन्तः–** नास्ति अन्तो गुणानां यस्य सः। सिद्धगन्धर्वादयः अपि यस्य गुणानाम् इयत्तां ज्ञातुं न शक्तवन्तः सः अनन्तः। विष्णोः अपरं नाम अनन्तः इति। तथा च कोषः– 'अनन्तः केशवे शेषे पुमाननवधौ त्रिषु'– मेदिनी।

**अञ्जना–** अञ्जनवर्णः अस्ति अस्याः इति अञ्जना। (अञ्जन+अच्+टाप्) अञ्जनवर्णः नाम चाकचक्ययुक्तः कृष्णवर्णः। तेन वर्णेन या युक्ता भवति सा अञ्जना इति उच्यते। उत्तरदिग्गजस्य पत्नी अञ्जना लोके प्रसिद्धा। हनूमतः माता अञ्जनादेवी अपि लोके प्रसिद्धा।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

# नूतनदेशयोः प्रादुर्भावः

समग्रे प्रपञ्चे डिसेम्बर्मासस्य ३१ तमे दिनाङ्के मध्यरात्रसमये नूतनवर्षस्य स्वागतार्थं घण्टाः वादिताः। तस्मिन् एव समये 'प्रांग्' इत्यत्र 'ब्राटिस्लावा' इत्यत्र च, 'जेक्' इत्यस्य 'स्लोवाकिया' इत्यस्य च नूतनदेशस्य प्रादुर्भावस्य निमित्तं घण्टाः वादिताः। एतौ रिपब्लिक्देशौ स्वातन्त्र्येण स्थितौ इत्यतः प्रपञ्चमानचित्रे 'जेकोस्लोवाकिया' नामकस्य तिरोधानं जातम्। स्वातन्त्र्यप्राप्तेः विंशतिदिनानाम् अनन्तरम् एतौ देशौ संयुक्तराष्ट्रसङ्घस्य सदस्यतां प्राप्तवन्तौ। एतेन संयुक्तराष्ट्रसङ्घस्य सदस्यानां सङ्ख्या १७० मिता जाता।

१९१८ तमे वर्षे आष्ट्रियासाम्राज्यस्य पतनात् जेकोस्लोवाकियादेशस्य उद्भवः जातः। आष्ट्रियासाम्राज्यस्य अङ्गभूतानां बोहमिया, मोराविया, सैलीशिया इत्येतेषां राज्यानां, रुथेनियाराज्यस्य कस्यचित् भागस्य च मेलनेन एषः देशः निर्मितः। थामस् ग्यारिक् मजारिक्, ऐड्वर्ड् बेन्स् च एतस्य नूतनदेशस्य नायकौ जातौ। ग्यारिक् मजारिक् प्रथमाध्यक्षत्वेन १९३५ तमवर्षं यावत् अधिकारं निरूढवान्। ततः बेन्स् अध्यक्षः जातः।

तत्समये राज्यविस्ताराकाङ्क्षिणः ओडोल्फ् हिट्लर्वर्यस्य दृष्टिः जेकोस्लोवाकियादेशस्य उपरि पतिता। १९३८ तमे वर्षे सः 'सुडेटन् ल्याण्ड्' प्रदेशं वशीकृतवान्। अनन्तरवर्षे सः पोलेण्ड्भागस्य उपरि आक्रमणं कुर्वन् द्वितीय-जागतिकयुद्धारम्भतः पूर्वं जेकोस्लोवाकियादेशं समग्रतया वशीकृतवान्। ततः बेन्स् लण्डन् गतः। सः प्रवासिसर्वकारस्य स्थापनं कृतवान्।

१९४५ तमे वर्षे नाजीजर्मनीपराजयः, मित्रपक्षाणां जयः च यदा जातः तदा जेकोस्लोवाकियादेशः सोवियत्सङ्घस्य अधीनः जातः। १९४८ तमे वर्षे अन्तोनिन् नोवोत्नीवर्यस्य नायकत्वे अत्र कम्युनिस्ट्शासनम् आरब्धम्। युद्धकारणतः देशस्य आर्थिकी स्थितिः शोचनीयतां गता आसीत्। अतः आर्थिकोन्नतेः साधनार्थं जनाः उदारनीतिम् अपेक्षितवन्तः। एतस्य परिणामतः नोवोत्नी अधिकारपदात् च्युतः अभवत्। अलेक्साण्डर् ड्यूबेसक्नायकत्वे १९६८ तमे वर्षे प्रगतिप्रियाः अधिकारसूत्रं गृहीतवन्तः। किन्तु प्रगतिप्रियाणां कार्यविधानं जनेभ्यः न अरोचत। अनन्तरं रशियादेशेन प्रेषितं 'वार्सासन्धिसैन्यं' जेकोस्लोवाकियादेशस्य उपरि आक्रमणम् अकरोत्।




ड्यूबूसेक् त्यागपत्रं समर्पितवान्। ततः एतस्मिन् देशे बहूनि परिवर्तनानि जातानि।

जेकोस्लोवाकियादेशे २/३ जनाः जेक्जातीयाः। अन्ये स्लोवाकीयाः, जर्मनीयाः, पोलीयाः, हंगेरीयाः, पुनः केचन अल्पसङ्ख्याकाः च। अधिकसङ्ख्याकानां शासनात् असन्तृप्ताः इतरे स्वतन्त्रराज्यस्य अपेक्षां प्रकटितवन्तः। १९९२ तमे वर्षे जुलैमासे १७ दिनाङ्के स्लोवाक् राज्येन स्वस्य स्वतन्त्रता घोषिता। किन्तु बहुसङ्ख्याकाः एतत् विभाजनं न इच्छन्ति स्म। अतः 'उभयत्र अपि जनमतसङ्ग्रहणं कृत्वा अन्तिमनिर्णयः करणीयः' इति सन्धिप्रस्तावः उपस्थापितः। किन्तु नवेम्बर्मासे अङ्गराज्यानां राष्ट्रियसमावेशे एषः सन्धिप्रस्तावः निराकृतः। तत्र एतत् निर्णीतं यत् जेकोस्लाविक् फेडरेषन् अननुमतं यथा स्यात् तथा कर्तुं संविधाने परिष्कारम् आनेतुं फेडरल्पार्लिमेण्ट् प्रार्थनीयम् इति। फेडरल् पार्लिमेण्ट्द्वारा तु विभाजनम् अनुमतम्। अतः नूतनवर्षारम्भे नूतनदेशयोः प्रादुर्भावः जातः।

जनवरीमासे १५ दिनाङ्के जेक्-स्लोवाकियादेशीयौ विदेशमन्त्रिणौ न्यूयार्क्नगरम् आगतवन्तौ, संयुक्तराष्ट्रसङ्घस्य सदस्यतां प्राप्तुम् आवेदनमत्रं दत्तवन्तौ च। यदा सदस्यता प्राप्ता तदा मिलान् नाज्को उक्तवान् यत् महत्त्वपूर्णे एतस्मिन् दिने वयं स्लोवाकियेतिहासस्य नूतनस्य अध्यायस्य आरम्भं कृतवन्तः इति। जोसेफ् जीलेनीक् उक्तवान् यत् मानवाधिकारस्य स्वातन्त्र्यस्य च निमित्तं जेक् रिपब्लिक् स्वशक्त्यनुगुणम् अवश्यं परिश्राम्यति इति।



# व्यवहारे पात्रापात्रविवेकः

बलभद्रः नाम युवकः गुरुकुलविद्यां समाप्य स्वग्रामं प्रत्यागतवान्। बलभद्रस्य पिता लक्ष्मीरमणः अपि पण्डितः आसीत्। सः ग्रामे वसन् कृषिं कुर्वन् लेखनकार्यम् अपि करोति स्म। सः पुत्रम् उक्तवान् यत् भवान् अपि ग्रामे एव तिष्ठन् लेखनादिकार्येषु मम साहाय्यं करोतु इति। बलभद्रः एतत् अङ्गीकृतवान्।

लक्ष्मीरमणः संस्कृतग्रन्थानाम् अनुवादं प्रादेशिकभाषया करोति स्म, भूस्वामिने ददाति स्म च। भूस्वामी लक्ष्मीरमणाय परिश्रमानुगुणं धनं ददाति स्म।

बलभद्रस्य आगमनतः अनुवादकार्यं वेगेन प्रवृत्तम्। पुत्रस्य साहाय्येन हंसपुराणनामकं ग्रन्थं प्रादेशिकभाषया अनूदितवान् लक्ष्मीरमणः। अनूदितं तं ग्रन्थं पुत्रस्य हस्ते निक्षिपन् उक्तवान् सः– "वत्स! एतं ग्रन्थं भूस्वामिने ददातु। एतेन भूस्वामी निश्चयेन तुष्टः भविष्यति। हंसपुराणस्य अनुवादः करणीयः इति पूर्वं कदाचित् भूस्वामिना एव सूचितम् आसीत्। मया अङ्गीकृतम् आसीत् अपि। इदानीं तत् सिद्धम्" इति।

बलभद्रः तं ग्रन्थं स्वीकृत्य नगरं प्रति प्रस्थितवान्। मार्गे कश्चन मिलितवान्। सः बलभद्रं पृष्टवान्– "वत्स! बलभद्रः खलु भवान्? नितरां प्रवृद्धः दृश्यते भवान्। भवता विशेषाध्ययनं कृतम् इति श्रुतम्। कुत्र गन्तुम् उद्युक्तः? किं कार्यं तत्र?" इति।

युगपत् पृष्टानां सर्वेषां प्रश्नानाम् उत्तरं तु दत्तवान् बलभद्रः। किन्तु सः प्रश्नकर्ता कः इति न ज्ञातं तेन। एतत् जानन् सः पुरुषः उक्तवान्– "अहं कः इति न ज्ञातं वा? मां विस्मृतवान् वा? नारायणः अहम्। सध्यानं पश्यतु। अहं कः इति ज्ञातं वा?" इति।

तदा बलभद्रेण स्मृतं सर्वम् अपि।



नारायणः बालान् मेलयित्वा कथाः श्रावयति स्म। कथाकथनसमये मध्ये कदाचित् आगत्य नारायणस्य पत्नी पतिं बालान् च तर्जयित्वा बालान् ततः प्रेषयति स्म। नारायणः तु पुनः बालान् मेलयित्वा कथाम् अनुवर्तयति स्म। कथा कुत्र स्थगिता इति बालाः कदाचित् विस्मरेयुः चेदपि नारायणः तु सम्यक् स्मरति स्म। व्यक्तीनां स्मरणे नारायणस्य असाधारणशक्तिः इति जनाः वदन्ति स्म। बलभद्रः एतत्सर्वं स्मरन्– "झटिति अहं भवन्तम् अभिज्ञातुं न शक्तवान् यत् तदर्थं क्षन्तव्यः" इति वदन् क्षमां प्रार्थितवान्।

तदा नारायणः हसन्– "अये, अलं क्षमायाचनेन। श्वः सायङ्कालाभ्यन्तरे भवान् ग्रामं प्रत्यागच्छेत् खलु? प्रत्यागमनसमये नगरात् मन्निमित्तम् एकं नारिकेलफलं भवता आनेतव्यम्। परश्वः प्रातः देवालये भगवते तत् अर्प्यते मया। अस्माकं ग्रामे उत्तमानि नारिकेलानि न उपलभ्यन्ते" इति उक्तवान्।

"श्वः सायङ्कालात् पूर्वं भवदर्थं नारिकेलम् अवश्यम् आनेष्यामि" इति उक्तवान् बलभद्रः।

तदा नारायणः पुनः उक्तवान्– "न विस्मर्तव्यं भवता। एतस्मिन् ग्रामे अहं यदि कमपि किमपि कार्यं वदेयं तर्हि सः अङ्गीकारपूर्वकं शिरः चालयति। किन्तु कार्यं तु कोऽपि न करोति। भवान् वा मम कार्यं कुर्यात् इति मम विश्वासः" इति।

एतत् श्रुत्वा बलभद्रः हसन्– "श्वः सायङ्कालाभ्यन्तरे नारिकेलम् अवश्यम् आनेष्यामि" इति उक्त्वा अग्रे गतवान्। सायं नगरं प्राप्य ग्रन्थं भूस्वामिने अर्पितवान्। ग्रन्थं दृष्ट्वा भूस्वामी आश्चर्यम् अनुभवन् पृष्टवान्– "एतावच्छीघ्रम् एतत् कार्यं कथं सम्पन्नम्?" इति।

तदा बलभद्रः गुरुकुले आत्मना कृतम् अध्ययनं, पितुः कार्ये साहाय्यं च विस्तरेण निवेदितवान्। तदा भूस्वामी कञ्चित् श्लोकं निर्दिश्य– "एतस्य तात्पर्यं वदतु" इति उक्तवान्। श्लोकं परिशील्य बलभद्रः उक्तवान् यत् एतस्य श्लोकस्य बहवः अर्थाः

सम्भवन्ति इति। अनन्तरं सः तस्य श्लोकस्य अष्टादश अर्थान् उपवर्णितवान्।

एतत् श्रुत्वा आश्चर्यचकितः सन्तुष्टः च भूस्वामी– "भवान् असाधारणः पण्डितः। यदि भवान् अत्र चत्वारि दिनानि तिष्ठेत् तर्हि अहं पण्डितसभाम् आयोजयेयम्" इति उक्तवान्।

तदा बलभद्रः स्मृतवान् यत् नारायणेन नारिकेलानयनम् उक्तम् इति। किन्तु एतत् कार्यम् अस्ति इति भूस्वामिनं वक्तुं बलभद्रस्य सङ्कोचः। क्षणकालस्य चिन्तनस्य अनन्तरं सः एकं लघु असत्यम् उक्तवान्– "श्रीमन्! मम पितामही अस्वस्था अस्ति। तस्यै मया औषधं सायङ्कालात् पूर्वं नेतव्यम्" इति।

"एतावदेव खलु? औषधस्य नाम सूचयतु। अहं सेवकद्वारा तत् भवद्गृहं प्रापयामि" इति उक्तवान् भूस्वामी।

तदा बलभद्रः उक्तवान्– "तथा न भवति श्रीमन्! वस्तुतः मम पितामह्याः अस्वास्थ्यं मानसिकम् अपि अस्ति। अहं विद्याभ्याससमये गृहे न भवामि स्म खलु? अतः सा खेदम् अनुभवति स्म। तदर्थम् इदानीम् अहं स्वयं प्रतिदिनम् औषधं पाययन् अस्मि। एवं कृतं चेदेव परिणामः भवेत् इति वैद्येन सूचितम् अस्ति अपि" इति।

"अस्तु तर्हि। अद्य रात्रौ अत्र तिष्ठन् विश्रान्तिसुखम् अनुभवतु। श्वः गमनात् पूर्वं मां पश्यतु च" इति उक्त्वा भूस्वामी बलभद्रस्य वासार्थं व्यवस्थां कारितवान्।

अनन्तरदिने प्रातः नारिकेलस्य क्रयणार्थं





अनन्यगतिकः बलभद्रः भूस्वामिनः समीपं गतवान्। स्वस्य कष्टं निवेद्य भूस्वामिनं प्रार्थितवान् च– "मम पितामही नगरस्य नारिकेलं विशेषतः इच्छति। किन्तु विपण्याम् एकम् अपि नारिकेलं मया न प्राप्तम्" इति।

"एतावदेव खलु? अलं चिन्तया" इति उक्त्वा भूस्वामी दश सहस्रं रूप्यकाणि चत्वारि नारिकेलफलानि च बलभद्राय दत्तवान्।

बलभद्रः यदा ग्रामं प्राप्तवान् तदा सायङ्कालः जातः आसीत्। सः पित्रे धनं समर्प्य प्रवृत्तं समग्रं पितरं निवेदितवान्। तदा पिता लक्ष्मीरमणः उक्तवान्– "इतः पूर्वं कस्यचित् अपि ग्रन्थस्य निमित्तं भूस्वामिना एतावत् धनं न दत्तम् आसीत्। भवतः प्रतिभां दृष्ट्वा सः नितरां सन्तुष्टः इति तु सुस्पष्टम्। यदि भवान् पण्डितसभायां भागं गृहीतवान् स्यात् तर्हि लक्षाधिकरूप्यकाणि पारितोषिकत्वेन प्राप्तवान् स्यात्। भवता अनुचितं कृतम्" इति।

"गुरुकुले गुरुः मां बोधितवान् आसीत् यत् दत्तस्य वचनस्य भङ्गः कदापि न करणीयः इति, वचनपरिपालनं धनस्य अपेक्षया श्रेष्ठम् इति च। अतः वचनपालनम् एव प्रधानम् इति निर्णीतं मया" इति उक्तवान् बलभद्रः।

तदा पिता लक्ष्मीरमणः उक्तवान्– "वचनपालनम् अवश्यं करणीयम् इति वचनम् अहम् अपि अङ्गीकरोमि। किन्तु

बलभद्रः विपणिं गतवान्। किन्तु तत्र नारिकेलापणः कोऽपि उद्घाटितः न आसीत्। नारिकेलवणिक्प्रमुखः पूर्वदिने दिवङ्गतः आसीत्। तन्निमित्तं सर्वे नारिकेलापणिकाः आपणं पिहितवन्तः आसन्।

बलभद्रः भूस्वामिगृहं प्रत्यागतवान्। तत्र पाचकम् उक्तवान् यत् एकं नारिकेलम् आवश्यकम् इति। तदा पाचकः उक्तवान्– "अत्र गोणीमितानि नारिकेलानि सन्ति। किन्तु पाचकः अहं भूस्वामिनः अनुमतिं विना कस्मैचित् अपि किमपि दातुं न अर्हामि खलु? अतः भवान् भूस्वामिनं स्वस्य अपेक्षां वदतु" इति।

नारायणाय यत् वचनं दत्तं तस्य पालनार्थं भवान् एवं व्यवहृतवान् खलु इति मम खेदः। एतादृशे सन्दर्भे पात्रापात्रता अपि भवता अवश्यं द्रष्टव्या। अन्यथा भवान् जीवने सदा कष्टम् एव अनुभवेत्" इति।

'पिता यत् वदति तदपि युक्तम् एव' इति चिन्तयन् एव बलभद्रः नारिकेलं स्वीकृत्य नारायणस्य गृहं गतवान्। नारायणस्य गृहं कीलितम् आसीत्। प्रतिवेशिनः यदा पृष्टाः तदा ज्ञातं यत् नारायणस्य पत्न्याः मरणस्य अनन्तरं सः कदा आगच्छति कदा वा निर्गच्छति इति कोऽपि न जानाति इति।

बलभद्रः किञ्चित्कालं तत्रैव उपविश्य नारायणस्य प्रतीक्षां कृतवान्। तावता अपि नारायणः न आगतः। अतः बलभद्रः 'नारिकेलम् आनीतम् अस्ति' इति कागदे लिखित्वा तत् पत्रं ताले निवेश्य गृहं गतवान्।

अनन्तरदिने प्रातः अपि बलभद्रः नारिकेलं गृहीत्वा नारायणस्य गृहं गतवान्। तदा अपि गृहं कीलितम् आसीत्। बलभद्रः ततः मन्दिरं गतवान्। तत्र अर्चकः उक्तवान् यत् सद्यः नारायणः मया न दृष्टः इति। "नारायणः यदि अत्र आगच्छेत् तर्हि मया नारिकेलम् आनीतम् इति वार्तां तं निवेदयतु" इति अर्चकम् उक्त्वा ततः गतवान् बलभद्रः।

मध्याह्ने पुनरपि नारायणस्य गृहं गतवान् बलभद्रः। सौभाग्यवशात् नारायणस्य गृहम् उद्घाटितम् आसीत्। आतपकारणतः आगतं स्वेदं मार्जयन् बलभद्रः अन्तः गतवान्। नारायणः पुस्तकं पठन् आसीत्। सः बलभद्रं



दृष्ट्वा कोपमिश्रितेन स्वरेण पृष्टवान्– "यदा अहं पठन् भवामि तदा जनाः मां वृथा पीडयन्ति। भवते किम् आवश्यकम्?" इति।

"भवन्तं द्रष्टुं ह्यः रात्रौ अहम् अत्र आगतः। प्रातः अपि आगत्य गतवान्। पुनः इदानीम् आगतवान् अस्मि। ह्यः, अद्य प्रातः च गृहं कीलितं दृष्टं मया। किं भवान् अन्यं ग्रामं गतवान् आसीत्?" इति पृष्टवान् बलभद्रः।

"कुत्रापि न गतवान् आसम्। आगन्तुकानां पीडातः आत्मनः रक्षणार्थम् अहं गृहं कीलयित्वा पृष्ठतः स्थितेन द्वारेण अन्तः प्रविश्य पठामि" इति उक्तवान् नारायणः।

"एवं वा? अद्य प्रातः भवता भगवते नारिकेलं नैवेद्यरूपेण न समर्पितं वा?" इति पृष्टवान् बलभद्रः।

"न। कदाचित् नारिकेलम् अर्पयामि। यदा गृहे नारिकेलं न भवति तदा अर्पणम् अपि नास्ति। किं समर्पणेन, असमर्पणेन वा? एषु दिनेषु मम स्वास्थ्यं सर्वथा असमीचीनं जातम् अस्ति। वैद्यः सूचितवान् अस्ति यत् प्रतिदिनम् उग्रभस्म सेवनीयम् इति। यदि भवान् पुनः नगरं गमिष्यति तर्हि मन्निमित्तम् उग्रभस्म आनयतु" इति उक्तवान् नारायणः।

'आनीतं नारिकेलं दृष्ट्वा अपि नारायणः किमपि न उक्तवान् एव खलु?' इति नितरां खिन्नः बलभद्रः। सः नारिकेलं नारायणस्य पुरतः निक्षिप्य एतस्य आनयनार्थं यः परिश्रमः निरूढः तं विस्तरेण निवेदितवान्।

तदा नारायणः उक्तवान्– "वत्स! मम वचनस्य अनुगुणं वस्तु भवान् यत् आनीतवान् तत् ममैव आश्चर्याय। मम वचने भवान् आदरवान् भवेत् इति मया न निरीक्षितम् आसीत्। अस्तु तावत्, उग्रभस्मनः निमित्तम् एवं स्वयं प्रयत्नः मास्तु। अन्यद्वारा आनाययतु कदाचित्" इति।

पात्रापात्रतां विचार्य साहाय्यम् आचरणीयम् इति पित्रा यत् बोधितं तत् सम्यक् अवगतवान् बलभद्रः। ततः सः जीवने अपात्रे कदापि न विश्वसितवान्।






# १२

(मायाभवनतः निर्गता राजकुमारी विद्यावती महेन्द्रनाथः च पर्वतप्रदेशे स्थितं मुनिकुटीरं प्राप्तवन्तौ। तौ दृष्ट्वा मुनिः सन्तुष्टः अभवत्। सः स्वस्य पूर्वाश्रमस्य कथां निवेदितवान्। महेन्द्रनाथः ज्ञातवान् यत् सः मुनिः न अन्यः, अपि तु स्वपितृव्यः एव इति। महेन्द्रनाथः कश्चन राजकुमारः इति ज्ञातवती विद्यावती। महेन्द्रनाथः विद्यावती च मुनिवेषं धृत्वा मुनिना सह वीरगिरिं प्रति प्रस्थितवन्तौ। तदनन्तरम्....)

राजकुमार्याः अदृश्यतायाः अनन्तरं सप्ताहद्वयम् अतीतं चेदपि तस्याः वार्ता काऽपि नास्ति इति चिन्ताक्रान्तौ स्तः राजा राज्ञी च। आचार्यः वाचस्पतिमिश्रः राजभवनं प्रति आनायितः, युवराज्ञ्याः ग्रहगतिः इदानीं कथम् अस्ति इति पृष्टः च। वाचस्पतिमिश्रः युवराज्ञ्याः जन्मकुण्डलीं विशेषावधानेन परिशीलितवान्।

तदा राजा वाचस्पत्याचार्यं पृष्टवान्– "आचार्यवर्य! जगत्पत्याचार्यः अन्यैः ज्योतिषिकैः मिलित्वा किं चिन्तनं कृतवान् इति किमपि ज्ञातं वा?" इति।

"अद्यावधि किमपि न ज्ञातं महाराज! एतस्य ज्ञानार्थम् अहं मदीयं शिष्यं मञ्जुनाथं नियोजितवान् अस्मि। श्वः परश्वः वा सः कामपि वार्ताम् आनयेत्। विशेषवार्ता यत्



आगतः कश्चन भटः तम् उक्तवान्– ''इदमिदानीं काचित् शिबिका राजभवनस्य पुरतः आगत्य स्थिता। कश्चन अश्वारोही अपि उपस्थितः। सः वदति यत् त्वरया महाराजः द्रष्टव्यः मया इति'' इति।

''तदस्तु, सः स्वकीयं नाम किम् इति उक्तवान्?'' इति भटं पृष्टवान् उग्रसेनः।

''नाम न उक्तं तेन। दर्शनात् तु ज्ञायते यत् सः कश्चन राजकुलोत्पन्नः स्यात् इति'' इति उक्तवान् भटः।

''अस्तु, शिबिकायां का अस्ति?'' इति पुनः पृष्टवान् उग्रसेनः।

''मया तत् न ज्ञातम्। शिबिका जवनिकया आवृता अस्ति'' इति उक्तवान् भटः।

''अस्तु, तर्हि। भवान् गच्छतु। अहं तत्र आगच्छामि'' इति भटम् आदिश्य राजभवनं पुनः प्रविष्टवान् उग्रसेनः।

उग्रसेनः शिबिकायाः अश्वारोहिणः च आगमनस्य वार्तां राजानं निवेदितवान्। तदा महराज्ञी उक्तवती– ''प्रभो, शिबिकायाम् आवयोः पुत्री एव स्यात्। सः अश्वारोही कश्चन राजकुमारः स्यात्। अतः गत्वा पश्याम तावत्'' इति।

राजा क्षणकालं विचिन्त्य सन्देहेन उक्तवान्– ''यदि शिबिकायाम् आवयोः पुत्री एव स्यात् तर्हि एतावता तया राजभवनं प्रवेष्टव्यम् आसीत् खलु?'' इति।

अनन्तरं त्रयः अपि भवनस्य पुरोभागं

शुभसमयः आसन्नः अस्ति इति युवराज्ञ्याः जन्मकुण्डल्याः दर्शनात् ज्ञायते। ग्रहगतिः सूचयति यत् एतावता कालेन, अचिरात् एव वा युवराज्ञी राजप्रासादं प्राप्नुयात्'' इति ससन्तोषम् उक्तवान् वाचस्पतिमिश्रः।

''आनन्ददायिनी वार्ता निवेदिता तत्रभवता। राजकुमारी सकुशलं प्रत्यागच्छतु इति प्रतिदिनं भगवन्तं प्रार्थयामि अहम्'' इति उक्तवती राज्ञी वज्रेश्वरीदेवी।

''उग्रसेनवर्य! नगरस्य प्रधानमार्गेषु जागरूकतया स्थातव्यम् इति भटान् आज्ञापयतु'' इति आदिष्टवान् राजा।

''यथाज्ञापयति देवः'' इति उक्त्वा ततः निर्गतवान् उग्रसेनः। तावता अभिमुखम्

गतवन्तः। तावता शिबिका भूमौ स्थापिता आसीत्। अश्वारोहा च अश्वात् अवतीर्णः आसीत्। सः अग्रे आगत्य राजानं नमस्कृत्य उक्तवान्– "हिमगिरिराज्यं शासितवतः त्रिलोकपतेः पौत्रः अहम्" इति। एवं कथयतः तस्य राजदर्पः स्फुटतया दृश्यते स्म।

"हिमगिरेः राजा उमापतिः किल?" इति पृष्टवान् राजा।

"आं महाराज! उमापतिः राजानं त्रिलोकपतिं पदच्युतं कृत्वा सिंहासनं स्वायत्तीकृतवान्। अहं त्रिलोकपतेः अनुजस्य कैलासपतेः पौत्रः। यदा उमापतिः हिमगिरिसिंहासनं स्वाधीनीकृतवान् तदा मम पितामहः कैलासपतिः, पिता गजपतिः, अहं च हिमगिरिराज्यं परित्यज्य गतवन्तः। मम नाम जगत्पतिः इति" इति सः अश्वारोही दर्पेण एव उक्तवान्।

जगत्पतिः इति नाम्नः श्रवणात् राजा, आचार्यः वाचस्पतिमिश्रः च आश्चर्य-चकितौ। तौ आश्चर्येण परस्परमुखं दृष्टवन्तौ। उग्रसेनस्य हस्तः खड्गग्रहणार्थम् उद्युक्तः अभवत्।

"अहं सन्तोषकरीं वार्ताम् आनीतवान् अस्मि महाराज! भवतः पुत्रीं विद्यावतीं संरक्ष्य आनीतवान् अस्मि। इदानीं विद्यावती शिबिकायाम् अस्ति" इति शिबिकां प्रदर्शयन् उक्तवान् जगत्पतिः।

"किं, मम पुत्री शिबिकायाम् अस्ति?"



इति उद्वेगेन उक्त्वा द्वित्राणि पदानि अग्रे स्थापितवती महाराज्ञी।

किन्तु नेत्रसङ्केतेन एव तस्याः अग्रे गमनं निवारयन् राजा जगत्पतिम् उक्तवान्– "यदि शिबिकायां विद्यावती एव स्यात् तर्हि सा इतोऽपि किमर्थं ततः न अवतीर्णा? राजभवनपरिसरः वयं वा अपरिचिताः तु न खलु? तस्याः अनारोग्यं किमपि नास्ति खलु?" इति।

"अस्वास्थ्यं किमपि नास्ति। शिबिकातः बहिः आगन्तुं ताम् अहं सूचयिष्यामि" इति राजानम् उक्त्वा जगत्पतिः शिबिकायाः जवनिकाम् उन्नीय उक्तवान्– "युवराज्ञि! शिबिकातः बहिः आगच्छतु तावत्। भवत्याः



सन्देहः एव नास्ति" इति दृढस्वरेण उक्तवान् जगत्पतिः। किन्तु तस्य वचने अल्पः सन्देहः भीतिः चापि दृश्यते स्म।

"कथम् एवं निश्चयस्वरेण वदति भवान्? इतः पूर्वं भवता विद्यावती कुत्रापि दृष्टा वा?" इति तीक्ष्णस्वरेण पृष्टवान् सेनापतिः उग्रसेनः।

"एतां दुष्टेभ्यः रक्षितवान् अहम्। यावत् दुष्टग्रहपीडा एतस्याः आसीत् तावत् जागरूकतया रक्षितवान् अपि। इदानीं ताम् अत्र आनीतवान् अस्मि" इति उक्तवान् जगत्पतिः।

"युवराज्ञी दुष्टग्रहपीडया युक्ता अस्ति इति कथं ज्ञातं भवता?" इति पृच्छन् वाचस्पतिमिश्रः अग्रे गत्वा जगत्पतेः हस्तं दृढं गृहीतवान्।

"ज्योतिषिकाणां द्वारा ज्ञातं मया" इति उक्तवान् जगत्पतिः।

"जगत्पत्याचार्यनाम्ना पूर्वं भवान् वेषान्तरेण मत्समीपम् आगच्छति स्म। युवराज्ञ्याः ग्रहगतिं ज्ञात्वा भवान् एव तां चोरितवान्। महाराजाय तां प्रत्यर्पयितुम् इच्छन् भवान् योग्यं मुहूर्तं ज्ञातुम् इच्छति स्म। अतः भवान् ज्योतिषिकैः सह समालोचनं कृतवान्। एवं ननु? अये दुष्ट जगत्पते! इदानीं भवतः दुष्कृत्यं प्रकटितम् अभवत्। किञ्चित्कालं यावत् अहम् अपि भवति विश्वासं प्रकटितवान् आसम्। धिक् मम

मातापितरौ अन्ये च भवत्याः दर्शनार्थं समुत्सुकाः सन्ति" इति।

मन्दया गत्या मालिनी शिबिकातः बहिः आगतवती। भीतियुक्तया दृष्ट्या तत्र स्थितान् सर्वान् दृष्टवती च।

प्रथमदर्शनात् तु सा विद्यावती इव एव दृश्यते स्म। 'एतस्याः एवं भीतिः किमर्थम्?' इति राजा राज्ञी च चिन्तयन्तौ आस्ताम्। तावता सेनापतिः उग्रसेनः विद्युद्वेगेन जगत्पतेः समीपं गत्वा तं कण्ठे गृहीत्वा उग्रस्वरेण उक्तवान्– "एषा युवराज्ञी विद्यावती सर्वथा न। अस्मान् मिथ्यावचनेन वञ्चयन् अस्ति भवान्" इति।

"न। एषा युवराज्ञी विद्यावती एव। अत्र



अविवेकिताम्। धिक् भवतः वञ्चनाम्" इति उक्त्वा जुगुप्सया जगत्पतेः हस्तं परित्यक्तवान् वाचस्पतिमिश्रः।

अत्रान्तरे जगत्पतिः कण्ठे धृतां मालां बलात् आकृष्टवान्। तावता तत्र तीव्रकान्तिः सकृत् प्रसृता, धूमः च सर्वत्र प्रसृतः। यदा धूमकारणतः सर्वे कष्टम् अनुभवन्तः आसन् तदा जगत्पतिः उग्रसेनस्य ग्रहणात् आत्मानं मोचयित्वा ततः पलायनं कृतवान्।

जगत्पतिः धावन् मुखद्वारसमीपं गत्वा अश्वम् आरोढुं यावत् प्रयत्नं कुर्वन् आसीत् तावता तत्र आगतवतः महेन्द्रनाथस्य दृष्टिः तस्य उपरि पतिता। 'कश्चित् चोरः रत्नमालाम् अपहृत्य पलायनं कुर्वन् अस्ति' इति आलोच्य महेन्द्रनाथः तं दृढं गृहीतवान्। तम् अश्वात् पातयित्वा तस्य हस्ते स्थितां रत्नमालां वशीकृत्य तं गले दृढं गृहीतवान्। ततः तम् उक्तवान् सः– "अये, भवतः कपटव्यवहारः समाप्तः इति भावयतु" इति।

तावता राजा, राज्ञी, वाचस्पतिमिश्रः च तत्र आगतवन्तः। राजा भटान् आज्ञापितवान्– "एतं दुष्टं गृहीत्वा हस्तौ बद्ध्वा कारगारे स्थापयन्तु" इति।

भटाः झटिति तं गृहीत्वा बद्धवन्तः। तावता सेनापतिः महेन्द्रनाथम् अभिजानन् पृष्टवान्– "अहो, महेन्द्रनाथः! एतस्य दुष्टस्य ग्रहणे भवता महत् साहाय्यम् अनुष्ठितम्। साधु, मित्र साधु! तदस्तु, युवराज्ञ्याः काऽपि वार्ता ज्ञाता वा?" इति।

"अहम् अत्र उपस्थिता अस्मि श्रीमन्" इति उक्तवती विद्यावती।

तदा सेनापतिः तस्याः उपरि दृष्टिं प्रसारितवान्। मुनिपुत्रीवेषधारिणीं ताम् अभिज्ञातवान् च। अनन्तरं सः महता आनन्देन उच्चस्वरेण उक्तवान्– "प्रभो, विद्यावती आगता अस्ति!" इति।

तावता तत्र उपस्थिता महाराज्ञी– "वत्से! कथम् अस्ति भवती? कुशलिनी खलु?" इति वदन्ती आनन्दाश्रूणि स्रावयन्ती पुत्रीं प्रीत्या दृढम् आलिङ्गितवती। अनन्तरं तस्याः हस्तं स्वहस्तेन गृहीत्वा प्रीत्या तस्याः शिरः आमृष्टवती च।

पुत्र्याः आलिङ्गनस्य अनन्तरं राजा पृष्टवान्– "वत्से! एषः वेषः किमर्थम्?" इति।

अत्रान्तरे तत्र आगता मालिनी मौनम् आगत्य विद्यावतीं नमस्कृतवती। ताम् उत्थाप्य पृष्टवती विद्यावती– "शिबिकायाम् उपविष्टवती भवती एव आसीत् वा?" इति।

महेन्द्रनाथः राजानं नमस्कृत्य उक्तवान्– "महाराज! मदीयं कार्यं साधितवान् अस्मि। युवराज्ञीम् अन्विष्य आनयने दैववशात् समर्थः जातः। सर्वं भवतः आशीर्वादस्य फलम्। सौभाग्यवशात् एतस्मिन् कार्ये मम पितृव्यस्य आशीर्वादः साहाय्यं च प्राप्तं मया" इति । एवं वदन् सः स्वस्य पार्श्वे स्थितं मुनिं हस्तसङ्केतेन सूचितवान् । राजा तम् आश्चर्येण दृष्टवान्।

तदा महेन्द्रनाथः पुनः उक्तवान्– "एषः मम पितृव्यः जितेन्द्रनाथः। महिमपुर्याः राजपरिवारस्य सदस्यः एषः। राज्ञः वीरेन्द्रनाथस्य अनुजः एषः। इदानीं संन्यासजीवनं यापयन् अस्ति" इति।

तदा राजा जितेन्द्रनाथं पश्यन् उक्तवान्– "पूर्वं कदाचित् देवीमन्दिरदर्शनार्थं यदा आगतम् आसीत् तदा मया वीरेन्द्रनाथः दृष्टः आसीत्। ततः मया श्रुतं यत् शत्रुभिः सः हतः इति। तत्रभवान् ....?" इति।

तदा मुनिवेषधारी जितेन्द्रनाथः



उक्तवान्– "यदा मम अग्रजस्य मरणं जातं तदा एषः महेन्द्रनाथः अल्पशिशुः आसीत्। आत्मरक्षणार्थम् एतेन, एतन्मात्रा च सह अहं महिमपुरीतः निर्गतवान्। ततः अल्पे एव काले केनचित् कारणेन मया संन्यासः गृहीतः। दैवयोगतः अरण्ये एतस्य महेन्द्रनाथस्य मेलनं जातम्। महिमपुर्याः वास्तविकः उत्तराधिकारी एषः एव इति भवन्तं निवेदयितुम्, अकस्मात् परित्यज्य यत् निर्गतं तदर्थं महेन्द्रनाथस्य मातरं क्षमां प्रार्थयितुं च अहम् अत्र आगतः" इति।

"महेन्द्रनाथस्य माता अस्मद्व्यवस्थाधीना कुशलिनी अस्ति। अहम् इदानीम् एव ताम् अत्र आनेष्यामि" इति उक्तवान्

उग्रसेनः।

"यदि अनुज्ञा स्यात् तर्हि अहं स्वयम् एव गत्वा तां सन्तोषयितुम् इच्छामि" इति विनयेन उक्तवान् महेन्द्रनाथः।

राजा सेनाधिपतिम् उग्रसेनम् आज्ञापितवान्– "महेन्द्रनाथस्य निमित्तं योग्या व्यवस्था भवतु। एषा एतन्माता च अस्माकं सत्काराहौं अतिथी" इति।

तदा महाराज्ञी– "प्रभो, कश्चन विषयः" इति उक्त्वा महाराजस्य कर्णयोः समीपे मन्दस्वरेण उक्तवती– "महेन्द्रनाथः आकारेण सुन्दरः, राजकुलोत्पन्नः, धीरः च। अस्माकं पुत्र्याः निमित्तं योग्यः वरः" इति।

तदा राजा अङ्गीकारपूर्वकं शिरः चालयन् उक्तवान्– "दैवम् अनुकूलकरं चेत् मङ्गलपरम्पराः एव आपतन्ति" इति। अनन्तरं मुनिं पश्यन् निवेदितवान् सः– "श्रीमन्! कानिचन दिनानि वा अत्र स्थित्वा वयं तोषणीयाः तत्रभवता" इति। ततः आचार्यं वाचस्पतिमिश्रं पश्यन् उक्तवान् सः– "आचार्यवर्य! युवराज्ञ्याः जन्मकुण्डलीं पुनरेकवारं परिशील्य अग्रिमकार्यं निश्चिनुयाम। अन्तः उपविशाम तावत्" इति।

राजा सपरिवारं ततः निर्गतः। मुनिः वाचस्पतिमिश्रः चापि तम् अनुसृतवन्तौ। महाराज्ञी पुत्र्या युवराज्ञ्या, मालिन्या च सह अन्तःपुरं गतवती।

सेनापतिः उग्रसेनः महेन्द्रनाथम् अभिनन्दनवचनानि वदन् उक्तवान्– "भवतः माता मया सगौरवम् अत्र आनेतव्या। अतः अहम् अपि भवता सह आगमिष्यामि। राजभवनं प्रति तस्याः सगौरवम् आनयनं मम कार्यं जातं यत् तदर्थम् अभिमानम् अनुभवामि" इति।

ततः महेन्द्रनाथः उग्रसेनः च प्रासादात् बहिः आगतवन्तौ। उभौ अपि अश्वम् आरुह्य महेन्द्रनाथमातुः निवासस्थानं प्रति प्रस्थितवन्तौ च।

–(समाप्तम्)






# महाशिल्पी

'सामान्यः कश्चित् वेतालः एव स्वप्रयत्नात् विमुखः न भवति। एवं स्थिते यदि अहं प्रयत्नात् विमुखः भवेयं तर्हि मम एव अपमाननम्' इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! एवं मध्यरात्रे घोरे श्मशानमार्गे भवान् यत् कष्टम् अनुभवन् अस्ति तस्य फलं भवता प्राप्येत वा न वा इति तु सन्देहः एव मम। फलप्राप्तिविषये भवतः निश्चयज्ञानम् अस्ति वा न वा इत्यपि न जानामि। किन्तु एतावत् तु जानामि यत् शूरेषु, वीरेषु, पण्डितेषु, कलाकारेषु च काचित् न्यूनता अवश्यं भवति इति। तादृशाः समस्यां व्यक्तिगतदृष्ट्या पश्यन्ति, न तु सामान्यदृष्ट्या, लौकिकदृष्ट्या

## वेतालकथा



वा। अतः एव ते समस्यां परिहर्तुम् अशक्नुवन्तः प्रयत्नात् विमुखाः भवन्ति, फलप्राप्तितः वञ्चिताः भवन्ति अपि। अत्र उदाहरणरूपेण महाशिल्पिनः अमरेन्द्रस्य कथां श्रावयामि। कथाश्रवणतः भवतः मार्गायासः अपि परिहृतः स्यात्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

चन्द्रगिरिराज्यस्य राजा कीर्तिचन्द्रः। सः कलाप्रियः आसीत्। तस्य आस्थाने सदा कविसम्मेलनानि प्रलचन्ति स्म। नृत्य-कार्यक्रमाः अपि प्रचलन्ति स्म। समग्रं राजभवनं विविधैः सुन्दरचित्रैः अलङ्कृतम् आसीत्। अपूर्वशिल्पसङ्ग्रहः अपि कृतः आसीत् राज्ञा।

कीर्तिचन्द्रः यद्यपि सर्वासु कलासु आसक्तः, तथापि शिल्पकलायां तस्य विशेषरुचिः आसीत्। कदाचित् विश्रान्त्यर्थम् उपविष्टवतः तस्य मनसि विचारः आगतः यत् रमणीया नृत्यशाला निर्मातव्या इति। 'नृत्यशाला कीदृशी स्यात्, कुत्र कुत्र कीदृशानि शिल्पानि स्थापनीयानि' इति एवं राजा योजनाम् अपि कृतवान्।

अत्रान्तरे राज्ञा ज्ञातं यत् राजधानीतः अनतिदूरे स्थिते ग्रामे अमरेन्द्रः नाम सुनिपुणः शिल्पी निवसति इति। अमरेन्द्रस्य शिल्पकलायाम् अपूर्वं सामर्थ्यम् आसीत्। किन्तु सः स्वस्य प्रतिभायाः विशेषप्रचारं, ततः धनसम्पादनं, कीर्तिसम्पादनं वा न इच्छति स्म।

अमरेन्द्रः स्वतृप्त्यर्थं शिल्पानां निर्माणं करोति स्म। तस्य हस्तस्य स्पर्शात् कठिना अपि शिला मृदुला भवति स्म इव। अतः अल्पेन एव कालेन सुन्दरं शिल्पं निर्मितं भवति स्म।

राजा निर्णीतवान् यत् अमरेन्द्रः राजशिल्पिपदे नियोजनीयः, तद्द्वारा नृत्यशालानिर्माणकार्यं कारणीयं च इति। अतः सः कांश्चन अधिकारिणः आहूय आज्ञापितवान् यत् राजशिल्पिपदे नियुक्तिं निवेद्य अमरेन्द्रवर्यं ससम्मानं राजधानीं प्रति आनयन्तु इति।

अधिकारिणः शिबिकया सह अमरेन्द्रगृहं

गतवन्तः। तदा अमरेन्द्रः उक्तवान्– "राजसम्मानप्राप्तौ इच्छा सर्वथा नास्ति मम। अतः मद्वचनैः भवन्तः महाराजं निवेदयन्तु यत् एतत् पदं स्वीकर्तुम् अहं न इच्छामि इति, अनङ्गीकारप्रदर्शनस्य निमित्तं क्षमा प्रार्थ्यते इति च" इति।

एतां वार्ताम् अधिकारिद्वारा श्रुत्वा राजा कीर्तिचन्द्रः स्वयम् अमरेन्द्रस्य समीपम् आगत्य निवेदितवान्– "शिल्पिवर्य! भवतः शिल्पसामर्थ्यस्य विषये मया बहुधा श्रुतम्। कस्यचित् कलाकारस्य कर्तव्यं भवति यत् सः स्वकलां जनानां हितार्थं तोषणार्थं च प्रकाशयेत् इति। भवतः शिल्पकलानिपुणता अपि विश्वव्यापिनी स्यात्। तदा एव सार्थकता" इति।

तदा अमरेन्द्रः उक्तवान्– "महाराज! भवतः कथनम् अङ्गीकरोमि अहम्। किन्तु एषु दिनेषु एवं प्रचलति यत् महाराजाः स्वकीर्तेः ख्यापनार्थं निपुणानां कलाकाराणां प्रतिभायाः उपयोगं धनग्रन्थेः इव प्राप्नुवन्ति" इति।

एतस्य श्रवणात् राजा कीर्तिचन्द्रः नितरां खिन्नः। सः खेदेन उक्तवान्– "अमरेन्द्रवर्य! मां सम्यक् न अवगतवान् भवान्। केचन राजानः भवता यथा उक्तं तथा व्यवहरेयुः नाम। मम तु भावना यत् कलाकाराः राज्ञाम् अपेक्षया अपि श्रेष्ठाः इति। मयि विश्वसितु कृपया। नृत्यशाला निर्मातव्या इत्येतं मम



स्वप्नं साकारीकरोतु कृपया" इति।

अमरेन्द्रः क्षणकालं विचिन्त्य उक्तवान्– "महाराज! भवता अभिलषितायाः नृत्यशालायाः निर्माणस्य भारम् अङ्गीकृतवान् अस्मि" इति।

अनन्तरम् अमरेन्द्रः राजधानीम् आगतवान्। नृत्यशालानिर्माणकार्ये उद्युक्तः अभवत् च।

कदाचित् युवराज्ञी विजयमाला नृत्यशालायाः निर्माणकार्यं द्रष्टुम् आगतवती। निर्मितानि शिल्पानि दृष्टवती च। शिल्पानाम् अनुपमं सौन्दर्यं दृष्ट्वा सा नितरां व्यामुग्धा।

तत्समये तस्याः दृष्टिः शिल्पकार्ये



निमग्नस्य अमरेन्द्रस्य उपरि पतिता। युवकस्य अमरेन्द्रस्य सौन्दर्यं तेजस्वितां च दृष्टवत्याः तस्याः मनसि विचारः आगतः यत् एतादृशी अपूर्वा व्यक्तिः ऐदम्प्राथम्येन दृश्यते मया इति। तत्क्षणे एव अमरेन्द्रविषये तस्याम् अनुरागः उत्पन्नः।

तस्मात् दिनतः युवराज्ञी प्रतिदिनं तत्र आगत्य शिल्पसौन्दर्यस्य आस्वादनं कुर्वती शिल्पशास्त्रविषये अमरेन्द्रं बहुधा प्रष्टुम् उद्युक्ता अभवत्। एवं वार्तालापतः परस्परपरिचयः मैत्री च प्रवृद्धः।

ततः कानिचन दिनानि अतीतानि। नृत्यशालानिर्माणकार्यं समाप्तम्। राजा अन्यैः प्रमुखैः सह आगत्य नृत्यशालायाः अपूर्वां शोभां दृष्ट्वा तृप्तिम् अनुभवन् बहुधा शिल्पिनः प्रशंसां कृतवान्। ततः सप्ताहाभ्यन्तरे नृत्यशालायाः शुभारम्भार्थं मुहूर्तः अपि निश्चितः। शुभारम्भदिने प्रसिद्धनर्तक्याः हेमसुन्दर्याः नृत्यकार्यक्रमः व्यवस्थापनीयः इत्यपि निश्चितम्।

अत्रान्तरे कदाचित् युवराज्ञी विजयमाला अमरेन्द्रसमीपम् आगत्य महतीं लज्जाम् अनुभवन्ती शिरः अवनमय्य स्वकीयम् अनुरागं निवेदितवती।

युवराज्ञ्याः एताम् अपेक्षां श्रुत्वा अमरेन्द्रः क्षणकालं स्तब्धः। सः किञ्चित्कालं चिन्तनं कृतवान्। अनन्तरं विजयमालां तीक्ष्णदृष्ट्या पश्यन् उक्तवान्– "भवती राजकुलोत्पन्ना। किन्तु अहं तादृशः न। कश्चन सामान्यः अस्मि" इति।

तदा विजयमाला मन्दहासपूर्वकम् उक्तवती– "अलं वंशगौरवस्य विषये चिन्तनेन। भवान् लोकविख्यातः महाशिल्पी अस्ति। अतः भवतः योग्यता अपि अपूर्वा एव" इति।

"युवराज्ञि! आवयोः विवाहः यदि भवेत् तर्हि तदर्थं महाराजस्य अङ्गीकारः अवश्यं स्यात्। अतः इतः सप्ताहाभ्यन्तरे भवती एतद्विषये महाराजस्य अनुज्ञां प्राप्नोतु। ततः मां पश्यतु च" इति युवराज्ञीम् उक्तवान् अमरेन्द्रः।

किन्तु अमरेन्द्रः सप्ताहं यावत् राजधान्यां

न स्थितवान् एव। चतुर्थे दिने एव सः कमपि अनुक्त्वा राजधानीतः निर्गत्य स्वग्रामं प्रतिगतवान्।

वेतालः एवं कथा समाप्य अवदत्– "राजन्! अमरेन्द्रस्य लौकिकज्ञानशून्यता बुद्धिहीनता च स्फुटा खलु? विवाहस्य अङ्गीकारं प्राप्नोतु इति युवराज्ञीम् उक्त्वा सप्ताहावधिकम् अवधिं सूचितवान् आसीत् सः। किन्तु तावत्कालं सः राजधान्यां न स्थितवान् एव। चतुर्थे दिने एव ततः निर्गतवान्। राजकुमार्याः उत्तरं कीदृशं स्यात् इति ज्ञात्वा खलु तेन अग्रिमः निर्णयः करणीयः आसीत्? अमरेन्द्रस्य एषः व्यवहारः तदीयाम् अविवेकितां खलु प्रदर्शयति? सः युवराज्ञयाम् अनुरक्तः न आसीत् वा? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "अमरेन्द्रः अविवेकी लौकिकदृष्टिहीनः वा न। सः नितरां चतुरमतिः। सः सप्ताहावधिकं समयं सूचितवान् यत् तदेव तदीयं तीक्ष्णमतित्वं व्यवहाराभिज्ञतां च निरूपयति। आत्मनः अनुरागं पितरं निवेदयितुं युवराज्ञ्यै सप्ताहात्मकः कालः सर्वथा न आवश्यकः इति जानाति स्म सः। या तीव्रम् अनुरक्ता भवति सा तावत्कालं व्यर्थं न यापयेत् एव। अमरेन्द्रस्य चिन्तनम् आसीत् यत् एषः विवाहः महाराजेन अपि अनुमतः यदि स्यात् तर्हि दिनद्वयाभ्यन्तरे तत् प्रकटितं भवेत् एव इति। तथापि तेन चत्वारि दिनानि यावत् प्रतीक्षा कृता। तथापि काऽपि वार्ता तु नास्ति। एतेन स्फुटं यत् एतद्विषये राज्ञः अङ्गीकारः नास्ति इति। अतः सः राजधानीं परित्यज्य स्वग्रामं प्रतिगतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# उद्योगप्राप्तिः

सदाशिवः नाम कश्चन युवकः उच्चविद्याभ्यासं समाप्य स्वग्रामं विजयपुरं प्रत्यागतवान्। सदाशिवस्य पिता तु बहुपूर्वम् एव दिवंगतः आसीत्। माता एव तं पोषयन्ती वर्धितवती आसीत्। उच्चशिक्षणार्थं नगरं प्रति प्रेषितवती आसीत् अपि।

ग्रामम् आगतः सदाशिवः सप्ताहानन्तरं मातरम् उक्तवान्– "अम्ब! अहम् उद्योगान्वेषणं करोमि" इति।

एतत् श्रुत्वा सन्तुष्टा माता उक्तवती– "वत्स! विद्यायाः अनुगुणम् उद्योगः प्राप्तव्यः खलु भवता? भूस्वामिनः कार्यालये तादृशः उद्योगः भवति। भवतः पितुः आत्मीयं मित्रं धनञ्जयः रघुनाथपुरे अस्ति। सः एतद्विषये अवश्यं भवतः साहाय्यं करिष्यति। अतः तं भवान् पश्यतु" इति।

अनन्तरदिने सदाशिवः निर्गत्य रघुनाथपुरं प्राप्य धनञ्जयं दृष्टवान्। सदाशिवस्य दर्शनात् धनञ्जयः नितरां सन्तुष्टः। सदाशिवेन उच्चविद्या प्राप्ता यत् तदर्थं सन्तोषं प्रकटयन् सः उक्तवान्– "भूस्वामिनः आस्थाने उद्योगः प्राप्तव्यः इति चिन्तनं तु उचितम् एव। किन्तु तत्र कश्चन क्लेशः अस्ति। भूस्वामिकार्यालये भैरवः नाम कश्चित् अस्ति। सः सन्तुष्टः चेत् भवतः कार्यं सिद्धम् इव। भैरवः यत् वदति तत् विना विरोधम् अङ्गीकरोति भूस्वामी" इति।

"भैरवस्य तोषणार्थं किं करणीयं मया?" इति पृष्टवान् सदाशिवः।

"भैरवस्य अधिकारलालसा अधिका। तस्य श्रेष्ठत्वस्य प्रशंसा कृता चेत् सः सन्तुष्टः भवति इति श्रूयते" इति उक्तवान् धनञ्जयः।

"अस्तु तर्हि। अहं तं दृष्ट्वा उद्योगप्राप्त्यर्थं प्रयत्नं करिष्यामि। माम्

आशिषा अनुगृह्णातु" इति उक्त्वा धनञ्जयं नमस्कृत्य ततः निर्गतवान् सदाशिवः।

भूस्वामी यत्र निवसति तत्रैव सदाशिवस्य मित्रं शेषाचलः अपि निवसति स्म। सदाशिवः शेषाचलं दृष्ट्वा स्वस्य इच्छां निवेद्य भैरवस्य स्वभावम् अपि निवेदितवान्।



अनन्तरं तौ दीर्घसमालोचनं कृत्वा एकम् उपायं चिन्तितवन्तौ। तदनुगुणम् अनन्तरदिने प्रातःकाले एव सदाशिवः भूस्वामिकार्यालयं गत्वा भैरवस्य दर्शनार्थं प्रयत्नं कृतवान्। तदा सेवकः उक्तवान् यत् सः इदानीं केनचित् सह वार्तालापं कुर्वन् अस्ति इति। मध्याह्नसमये कथमपि भैरवस्य दर्शनभाग्यं प्राप्तं सदाशिवेन।

सदाशिवः भैरवं विनयेन नमस्कृत्य स्वस्य विद्यार्हतां निवेद्य उक्तवान्– "श्रीमन्! भूस्वामिनः कार्यालये मम योग्यतायाः अनुगुणं कोऽपि उद्योगः यदि दाप्येत तर्हि अहम् अनुगृहीतः भवेयम्। भूस्वामी भवतः वचनं कदापि न तिरस्करोति इति श्रूयते" इति।

तदा भैरवः उक्तवान्– "उद्योगं प्राप्तुम् इच्छन्तः बहवः प्रतिदिनं मत्समीपम् आगच्छन्ति। सर्वेभ्यः उद्योगं दापयितुं न शक्नोमि खलु अहम्। अस्तु, श्वः भवान् आगत्य एतद्विषये मां पश्यतु" इति।

सदाशिवः ततः निर्गत्य शेषाचलं प्रवृत्तं समग्रं निवेदितवान्। तदा शेषाचलः उक्तवान्– "एवम् एव वदेत् भैरवः इति आवाभ्यां चिन्तितम् आसीत् खलु? अस्तु, श्वः अपि भवान् तं पश्यतु। तदा अपि कार्यं न सिद्धं चेत् तन्त्रप्रयोगं करवाम" इति।

अनन्तरदिने भैरवस्य दर्शनार्थं सदाशिवः पञ्चषाः घण्टाः यावत् प्रतीक्षां कृतवान्। अन्ते सेवकद्वारा सदाशिवम् आनाय्य भैरवः उक्तवान्– "भवान् श्वः आगच्छतु" इति।

अनन्तरदिने पुनः अपि सदाशिवः भैरवसमीपं गतवान्। तत्समये अन्ये त्रिचतुराः धनिकाः भैरवस्य श्रेष्ठतां प्रशंसन्तः उपविष्टवन्तः आसन्।

तदा शेषाचलः तत्र आगतवान्। आतङ्कमिश्रितया दृष्ट्या परितः पश्यन् स्थितवान्। तं पृष्टवान् सदाशिवः– "किम्

आवश्यकम्? कस्य अन्वेषणं करोति भवान्?" इति।

"रामशरणः एतस्मिन् समये माम् अत्र आगन्तुं सूचितवान् आसीत्। अत्र उद्योगं दापयामि इति मां सः उक्तवान् आसीत् अपि" इति उक्तवान् शेषाचलः।

एतत् श्रुत्वा क्रुद्धः भैरवः पृष्टवान्– "मां किमपि अनुक्त्वा सः रामशरणः कथं भवन्तम् अत्र आगन्तुम् उक्तवान्? वराकः सः उद्यानरक्षकः भवते कथं वा उद्योगं दापयेत्? अत्र उद्योगं दापयितुं समर्थः कः इति न जानाति वा भवान्?" इति।

तदा शेषाचलः शान्तस्वरेण पृष्टवान्– "श्रीमन्! कः भवान्?" इति।

तदा सदाशिवं पश्यन्, उक्तवान् भैरवः– "उद्योगप्राप्त्यर्थं दिनत्रयतः प्रतिदिनं मत्समीपम् आगच्छन् अस्ति खलु भवान्? अतः एतं वदतु– अहं कः इति" इति।

तदा सदाशिवः उक्तवान्– "भोः, भैरववर्यः नाम एषः एव। एषः अङ्गीकरोति चेदेव अत्र उद्योगः प्राप्यते, नान्यथा" इति।

तदा शेषाचलः सदाशिवं पश्यन् उक्तवान्– "मित्र! एषः एव वा भैरववर्यः! उद्योगप्राप्तीच्छया प्रतिदिनं भवान् एतं पश्यन् 'श्वः आगच्छतु' इति एतावत् उत्तरमात्रं प्राप्य गच्छन् अस्ति खलु? एवं स्थिते ...." इति।

धनिकानां पुरतः स्वस्य अपमाननं जायमानम् अस्ति इति चिन्तयन् भैरवः उक्तवान्– "एतस्मै उद्योगस्य दापने अल्पः विलम्बः जातः स्यात् नाम। किन्तु तादृशं सामर्थ्यं मम नास्ति इति खलु सन्देहः भवतः? पश्यतु तावत्। अद्यैव एतस्मै उद्योगं दापयिष्यामि। सर्वेषाम् उद्योगिनां पर्यवेक्षकं करिष्यामि एतम्। मां किम् अल्पं भावयति?" इति।

तस्मिन् एव दिने सदाशिवः भूस्वामिनः कार्यालये पर्यवेक्षकत्वेन नियुक्तः अभवत्। उपायः फलितः इति शेषाचलः सदाशिवः चापि नितरां सन्तुष्टौ।



# चन्दमामानुबन्धः–५३

अस्मद्देशीया पशुपक्षिसम्पत्–

## वर्णमयाः बकाः




अस्मद्देशीयाः वर्णमयाः बकाः ख्याताः सन्ति। मीटर्मितेन औन्नत्येन युतानाम् एतेषां शरीरे विविधाः वर्णाः भवन्ति। एतेषां मुखं श्वेतमिश्रितपीतवर्णयुतं भवति। मुखे रोमाणि न भवन्ति। दीर्घा नासिका पीतवर्णेन युक्ता भवति। पक्षौ कृष्णकालकयुक्तौ भवतः। पृष्ठभागः पाटलवर्णयुतः भवति। शरीररोमाणि उपरिभागे श्वेतानि भवन्ति। कुत्रचित् हरिद्वर्णता अपि दृश्यते। एते बकाः गृध्राकारकाः भवन्ति प्रायः।

वर्णमयाः बकाः सामान्यबकाः इव एव गभीरतारहिते जले पङ्कमय्यां भूमौ वा निवसन्ति। एते प्रायः समूहरूपेण एव दृश्यन्ते। आहारप्राप्तीच्छया कुत्रचित् एते निश्चलतया स्थिताः अपि दृश्यन्ते। मीनान्, मण्डूकान्, वृश्चिकान्, शम्बूकान् च गृहीत्वा खादन्तः एते उदरं पूरयन्ति।

जलसमीपे स्थितस्य वृक्षस्य शाखासु एते कदाचित् उपविशन्ति। उड्डयनसमये एते सकृत् पक्षौ सशब्दं चालयित्वा किञ्चित् अग्रे गत्वा शाखायाम् उपविशन्ति। शलाकाभिः तृणादिभिः च निर्मितः एतेषां नीडः विशालः, स्वच्छः, दृढः चापि भवति। नीडस्य अन्तः जलसस्यानि शैवालानि च सङ्गृहीतानि दृश्यन्ते। एकस्मिन् वृक्षे प्रायः उपविंशतिनीडाः भवितुम् अर्हन्ति।

वर्णमयबकानां ध्वनिकोषः न भवति। अतः एते मौनतया एव तिष्ठन्ति। क्वचित् मन्दं घुर्घुर्शब्दम् अपि कुर्वन्ति। मुखस्य अधोभागस्य चालनेन एते तादृशं शब्दम् उत्पादयितुं शक्नुवन्ति।



# आधुनिकं भारतीयसाहित्यम्

अमावास्यायां मध्यरात्रे एकाकितया प्रयाणसमये यदि हस्ते स्थितः दीपः अपि अकस्मात् निर्विण्णः भवेत् तर्हि यादृशं कष्टं पान्थेन अनुभूयते तादृशम् एव कष्टम् अनुभूतं भावुकेन अपि – एकमात्रावलम्बनं माता यदा विदङ्गता तदा।

पुणेनगरवासिनः भावुकस्य पिता रामः बहुपूर्वम् एव गृहं परित्यज्य निर्गतः आसीत्। 'दूरस्थानां दुष्टग्रहाणां प्रभावः यदा अपगमिष्यति तदा अहं कोट्यधीशः भविष्यामि' इति चिन्तयन् सः मुम्बयीनगरस्य

## हरिनारायण-आप्टेकृतिः – 'मी'

मार्गेषु इतरत्र च सञ्चरन् भवति स्म। किन्तु खेदस्य अयं विषयः यत् तेन निरीक्ष्यमाणं दिनं तु न आगच्छति एव।

भावुकस्य अपेक्षया सार्धैकवर्षेण ज्येष्ठा गङ्गा। तस्याः विवाहः केनचित् मध्यवयस्केन सह प्रवर्तते, यस्य च पत्नीद्वयम् इतः पूर्वं दिवं गतम् आसीत्। तृतीयां पत्नीं गङ्गाम् अपि सः दासीं भावयन् बहुधा पीडयति स्म। पत्युः पीडां सोढुम् अशक्नुवती गङ्गा पतिगृहं परित्यज्य अनुजेन सह एव स्थितवती।

अदृष्टवशतः भावुकः गङ्गा च शिवरामनामकस्य धनिकस्य आश्रयं प्राप्तवन्तौ। शिवरामः प्रगतिप्रियः सज्जनः। तस्य पत्नी पत्यनुकूला। शिवरामस्य एकमात्रापत्यं सुन्दरी अपि इच्छति स्म यत् मातापित्रोः आशयस्य अनुगुणम् उदात्तं जीवनं यापनीयम् इति।

गङ्गा-भावुकयोः विद्याभ्यासार्थं साहाय्यं करोति शिवरामः। किन्तु तत्कालीनः समाजः स्त्रीविद्यायाः प्रतिकूलः आसीत्। पतिगृहात् निर्गतायाः विषये जनाः अनादरं प्रकटयन्ति स्म। अतः गङ्गया, भावुकेन, शिवरामकुटुम्बेन च बहुधा कष्टानि अनुभूतानि। तथापि ते मार्गभ्रष्टाः न जाताः। यत् क्रियमाणम् अस्ति तत् उचितम् एव अस्ति इति तेषां दृढः विश्वासः आसीत्।

भावुकः न्यायवादी जातः। तथापि तस्य विशेषरुचिः तु समाजसेवायाम् एव। सामाजिककुरीतीनां निर्मूलनार्थं सः बहुधा प्रयतते स्म। एतद्विषये जनान् तत्र तत्र बोधयति स्म। समाजसेवाप्रतिपादिकायाः कस्याश्चित् पत्रिकायाः सम्पादकः अपि आसीत् सः। अतः तस्य मित्रगणः प्रवृद्धः। तथैव शात्रवः अपि केचन जाताः।

एतां स्थितिं दृष्ट्वा भावुकः खिन्नः। तथापि सः निश्चयं करोति यत् अहं स्वार्थार्थं न जीवामि, अपि तु

समाजहितार्थं जीवामि, समाजसेवार्थम् आत्मानं समर्पयामि इति। एतस्य लक्ष्यस्य साकारतार्थं विवाहः विघ्नं करोति इति चिन्तयन् सः निश्चिनोति यत् अहम् आजीवनं ब्रह्मचारी एव तिष्ठामि इति।

एषः निर्णयः यस्मिन् दिने भावुकेन कृतः ततः अनन्तरदिने एव शिवरामः भावुकं निवेदयति यत् भवता मम पुत्री परिणेतव्या इति। एताम् अपेक्षां श्रुत्वा भावुकः क्षणकालं स्तब्धः। महान्तम् उपकारं कृतवति शिवरामे विशेषादरः आसीत् भावुकस्य। सुन्दर्यां तु प्रीतिविश्वासादयः आसन् एव। तथापि भावुकः आत्मना कृतं सङ्कल्पं स्मरन् शिवरामं स्वकीयं निश्चयं निवेदयति। यद्यपि अप्रियं तथापि शिवरामः, तत्पत्नी, गङ्गा वा भावुकस्य सङ्कल्पस्य विरोधं न कुर्वन्ति। ते भावुकम् आदरेण एव पश्यन्ति।

भावुकः भावानन्दः इति नाम प्राप्य आश्रमे वासं कर्तुम् आरब्धवान्। तत्र अनुयायिभिः सह निवसन् स्वस्य समाजसेवाकार्यम् अनुवर्तितवान् सः। गच्छता कालेन तस्य स्वास्थ्यं दूषितं भवति। 'मम अनन्तरं



भवन्तः समाजसेवाकार्यम् अवश्यम् अनुवर्तयेयुः' इति अनुयायिनः उक्त्वा, तेषाम् अङ्गीकारं प्राप्य भावानन्दः इहलोकबन्धनात् मुक्तः भवति।

'मी'(अहम्)नामकः मराठीभाषया लिखितः एषः कथाग्रन्थः १९१६ तमे वर्षे प्रकाशितः अभवत्। एतस्य लेखकः हरिनारायण आप्टे। आत्मकथारूपेण नूतनशैल्या लिखितः एषः ग्रन्थः भारतीयसामाजिकजीवनस्य दर्पणः इव अस्ति। मराठीसाहित्यक्षेत्रे एतस्य कथाग्रन्थस्य प्रभावः इदानीम् अपि अनुवर्तते।

# भवन्तः जानन्ति वा?

१. ईजिप्ट्देशे प्राचीनकाले संरक्ष्यमाणस्य शवस्य आच्छादनार्थं भारतीयम् अमूल्यवस्त्रम् उपयुज्यते, स्म। तच्च वस्त्रं किम्?
२. पाश्चात्यदेशे 'वैद्यपितामहः' इति कः कथ्यते?
३. एल्लोराप्राङ्गणे स्थितस्य कस्यचित् हिन्दुदेवालयस्य निर्माणार्थं शतं वर्षाणि आवश्यकानि अभवन् इति श्रूयते। स च देवालयः कः?
४. मोहम्मदपैगम्बरवर्यस्य जन्मस्थानं किम्?
५. 'पौनार्-आश्रमः' केन स्थापितः?
६. मुसलमानजातीयः सः बङ्गालशासकः कः, यश्च महाभारतस्य अनुवादं वङ्गभाषया कर्तुम् आज्ञापितवान् आसीत्?
७. युनेस्को-आश्रये बालानां निमित्तं प्रपञ्चे पर्यटनं या करोति स्म तादृशी काचित् अभिनेत्री सद्यः दिवङ्गता। तया अभिनीतेन प्रथमचलनचित्रेण एव 'आस्कर् प्रशस्तिः' प्राप्ता आसीत्। सा अभिनेत्री का? तच्च चित्रं किम्?
८. पाञ्चालिकाक्रीडा सर्वप्रथमं कुत्र आरब्धा?
९. कुतुबमिनार्, ताजभवनम्, खुजराहो, अजन्तागुहाः – इत्येतेषु प्राचीनतमं किम्?
१०. अण्वस्त्रं सर्वप्रथमं कुत्र कदा निर्मितम् आसीत्?
११. 'परमवीरचक्रं' सर्वप्रथमं प्राप्तवान् कः?
१२. लेनिनूंग्राड्नगरेण पूर्वतनं नाम एव प्राप्तम् अस्ति। तच्च नाम किम्?
१३. आग्रानगरं पूर्वं केन नाम्ना निर्दिश्यते स्म?
१४. मीयान्मार्(बर्मा)देशस्य राजधानी का?
१५. तच्च दक्षिणभारतीयं मुसल्मानपूजास्थलं किं, यच्च हिन्दुजनान् अपि आकर्षति?

# उत्तराणि

१. मुलमुलखासुवस्त्रम्।.
२. हिपोक्रटिस्वर्यः।
३. कैलासमन्दिरम्।
४. मक्का।
५. विनोबाबावेवर्येण।
६. नुजरत् षा।
७. आड्रे हेप् बर्न्। 'रोषन् हालिडे'नामकम्।
८. भारते इजिप्ट्देशे च।
९. अजन्तागुहाः।
१०. जपानदेशे हिरोशिमा-नागासाकिनगरयोः। १९४५ तमे वर्षे।
११. मेजर् सोमनाथशर्मा। १९४७ तमे वर्षे।
१२. सेण्ट् पीटर्बर्ग् इति।
१३. अकबराबाद् इति नाम्ना।
१४. यांगून् (रंगून्)।
१५. नागौरस्थं क्वाडिनवाली साहेबदर्गा।



# गर्वभङ्गः

कमलावतीनामके ग्रामे कैलासशास्त्री नाम कश्चन ज्योतिषिकः निवसति स्म। ग्रहपीडापरिहारार्थं पूजादिकं कारयितुम् अपि सः जानाति स्म। 'निरस्तपादपे देशे एरण्डोऽपि द्रुमायते' इति वचनं श्रूयते खलु? तथैव आसीत् कैलासशास्त्री अपि। तस्मिन् ग्रामे समीपस्थेषु ग्रामेषु वा कोऽपि ज्योतिश्शास्त्रनिपुणः न आसीत्। अतः तत्परिसरे कैलासशास्त्रिणः विशेषादरः आसीत्। तेन सः गर्वितः जातः।

कष्टपरिहारमार्गम् इच्छन् यदा कोऽपि आगच्छति तदा तस्य पुरतः वदति कैलासशास्त्री– "अहं यत् वदामि तत् सम्भविष्यति एव। अतः मया यथा सूच्यते तथा आचरणीयं भवता। यदि मम वचनेषु अविश्वासं प्रकटयन् उपेक्षां कुर्यात् तर्हि भवतः सर्वनाशः भवेत्। मम शापः भवन्तं यमलोकं प्रेषयेत्" इति।

कदाचित् द्वित्राः कैलासशास्त्रिणः वचनेषु अनादरं प्रकटितवन्तः। किन्तु दौर्भाग्यवशात् तैः कष्टानि अनुभूतानि। 'कैलासशास्त्रिणः कोपस्य कारणतः एव एवं जातम्' इति भावयन्तः ते मूढाः कैलासशास्त्रिणं क्षमां प्रार्थितवन्तः। तस्य सूचनायाः अनुगुणं विशेषपूजां कारितवन्तः अपि।

आत्मनः श्रेष्ठतां वर्धयितुम् इच्छन् कैलासशास्त्री जनान् उक्तवान्– "काचित् कर्णपिशाची मदधीना अस्ति। ततः कः किं वदति, कः किं चिन्तयति इति अहं लीलया ज्ञातुं शक्नोमि। दैनन्दिनशिवपूजया मया वाक्सिद्धिः प्राप्ता अस्ति। अतः अहं यत् वदामि तत् भविष्यति एव" इति। एतत् श्रुतवतां जनानां कैलासशास्त्रिविषयिणी भीतिः प्रवृद्धा।

रामनाथः नाम कश्चित् तं ग्रामं नूतनतया आगतवान् आसीत्। सः तत्र क्षेत्रं क्रीत्वा कृषिं

कुर्वन् परिवारेण सह निवसति स्म। कदाचित् तेन श्रुतं यत् कश्चित् गृहविक्रयणं कर्तुम् इच्छति इति। रामनाथः तत् गृहं क्रीतवान्। गृहप्रवेशात् पूर्वं सः कैलासशास्त्रिणं निवेदितवान् यत् गृहे कोऽपि दोषः अस्ति चेत् वदतु इति।

कैलासशास्त्री गृहं परीक्ष्य उक्तवान्– ''गृहक्रयणात् पूर्वम् एव मम अभिप्रायः पृष्टः चेत् वरम् अभविष्यत्। एतस्मिन् गृहे बहवः दोषाः सन्ति। अत्र वासः कृतः चेत् गृहस्वामिनः भवतः मरणम् अचिरात् एव भविष्यति। अतः एतत् गृहं परित्यजतु'' इति।

एतत् श्रुत्वा रामनाथः किङ्कर्तव्यतामूढः जातः। तदा तत्रैव स्थिता रामनाथस्य स्नुषा क्रोधेन कैलासशास्त्रिणम् उक्तवती– ''इतः पूर्वम् अपि अत्र जनाः सुखेन वासं कृतवन्तः एव। एवं स्थिते इदानीं कथं वा दोषसद्भावः? शुभसन्दर्भे मङ्गलवचनानि वक्तव्यानि, न तु अशुभवचनानि। मङ्गलसन्दर्भे अशुभवचनं वदतः भवतः हस्तौ पादौ च शक्तिहीनौ भवेताम्। कटिश्च भग्ना भवेत्'' इति।

स्नुषायाः शान्त्यर्थं रामनाथः प्रयत्नं कृतवान्। तावता कैलासशास्त्री उत्तरीयं हस्तेन गृहीत्वा बलात् विधूय कोपेन कम्पमानः– ''महापण्डितं कैलासशास्त्रिणं माम् अपि निन्दन्त्याः भवत्याः कियत् धार्ष्ट्यम्? शृणोतु तावत्, एकया एव पूजया, एकेन एव मन्त्रजपेन एतद्गृहसदस्यान् सर्वान् अष्टभिः कष्टैः पीडितान् करिष्यामि। मम कोपस्य परिणामः कीदृशः इति



प्रदर्शयिष्यामि" इति निन्दन् ततः निर्गतवान्।

तथापि रामनाथस्य स्नुषा मौनं न स्थितवती। सा कैलासशास्त्रिणं प्रति-निन्दितवती– "अये वञ्चक! निरपराधिनः जनान् शापदानवचनेन भाययति वा? धिक् भवन्तम्। षण्मासान् यावत् शय्याम् आश्रित्य अष्ट कष्टानि भवान् एव अनुभविष्यति। गच्छतु तावत्" इति।

कैलासशास्त्री अपमानकारणतः क्रुद्धः सन्– "भवतीं भवद्गृहसदस्यान् च शाकिनीडाकिन्यादयः पिशाच्यः नाशयिष्यन्ति" इति एवं बहुधा वदन् निन्दन् मार्गम् आगतवान्। क्रोधकारणतः सः अभिमुखम् आगच्छन्तं शकटम् अपि न लक्षितवान्। अतः शकटस्य तस्य च घट्टनम् अभवत्।

एतेन कैलासशास्त्री नितरां व्रणितः। तस्य कटिः हस्तः पादः च भग्नाः। जनाः तं नीत्वा गृहे मञ्चे शायितवन्तः। वैद्याः चिकित्सां कृतवन्तः। तथापि षट् मासान् यावत् कैलासशास्त्री शय्यायां शयानः बहूनि कष्टानि अनुभूतवान्। धनव्ययः अपि महान् जातः।

अत्रान्तरे रामनाथस्य स्नुषायाः वचनानां प्रभावस्य विषये विविधाः वार्ताः प्रसृताः। 'सा यथा वदति तथा भविष्यति एव। अतः एव महाज्योतिषिकः कैलासशास्त्री अपि तया निन्दितः सन् बहूनि कष्टानि अनुभूतवान्' इति जनाः परस्परं वक्तुम् उद्युक्ताः अभवन्।



अतः जनाः रामनाथस्य स्नुषायां विशेषादरं प्रकटितवन्तः। कैलासशास्त्रिणः विषये स्थितः आदरः न्यूनः जातः।

कैलासशास्त्री यदा स्वस्थः जातः तदा सः पत्नीम् उक्तवान्– "अविवेकिनः ग्रामीणाः विश्वसन्ति यत् रामनाथस्य स्नुषायाः शापदानसामर्थ्यम् अस्ति इति। वस्तुतः तु शकटेन अहं घट्टितः अभवं यत् तत्र कारणं मम कोपान्धता एव, न तु तस्याः शापः। आस्तां तावत्। इदानीम् अहं सहस्ररुद्राभिषेकं कृत्वा तां दुष्टाम् अपायग्रस्तां करिष्यामि। शीघ्रं पूजार्थं सन्नाहं करोतु" इति।

तदा कैलासशास्त्रिणः पत्नी हसन्ती शान्तस्वरेण उक्तवती– "भवान् पूजादि-द्वारा कञ्चित् शापग्रस्तं कुर्यात्। किन्तु रामनाथस्य स्नुषा वचनमात्रेण एव तथा कर्तुं शक्नोति। वस्तुतः तस्याः तादृशं सामर्थ्यम् अस्ति वा न वा, किन्तु जनाः तु भावयन्ति यत् तस्याः तादृशं सामर्थ्यम् अस्ति इति। अतः तस्याः वचनस्य प्रभावः सर्वत्र दृश्यते। एतादृशे सन्दर्भे तस्याः स्नेहेन एव विशेषलाभः, न तु विरोधेन। अतः प्रथमं तस्याः मैत्रीं सम्पादयतु। ये भवतः अप्रीतिपात्राणि तान् उद्दिश्य तस्याः द्वारा निन्दावचनानि वाचयतु। पुण्यकार्याणां निमित्तं च पूजां करोतु" इति।

इदानीं कैलासशास्त्रिणः मनसि विचाराः– 'पण्डितेन मया जनकल्याणं चिन्तनीयम्। किन्तु अहं किम् एतत् कुर्वन् अस्मि? कस्यापि पीडनं मम जीवनस्य लक्ष्यं न। तथापि गर्वकारणतः अहं आत्मसम्मानं वर्धयितुं कोपादीनां वशे स्थितवान् आसम्। अतः एव सामान्या स्त्री काचित् मम अपमाननं कर्तुं शक्तवती। धिक् मम अविवेकिताम्। पाण्डित्यबलेन मया सम्मानः प्राप्तव्यः, न तु मिथ्यामार्गेण' इति।

यत्र सकृत् अनादरः जातः तत्र वासं कर्तुम् अनिच्छन् नूतने ग्रामे स्वसामर्थ्येन गौरवं प्राप्तुम् इच्छन् कैलासशास्त्री कमलावतीग्रामं परित्यज्य गतवान्।





# देवः प्रत्यक्षः जातः

सहस्राधिकवर्षेभ्यः पूर्वं केरलराज्ये तालगेहनामके ग्रामे पार्वती नाम काचित् गृहिणी निवसति स्म। तस्याः पतिः रामचन्द्रः राजोद्योगी आसीत्। कार्यनिमित्तं तेन सर्वदा प्रवासः करणीयः भवति स्म।

पार्वती सुब्रह्मण्यस्य परमभक्ता। सदा सा सुब्रह्मण्यं पूजयन्ती नामानि जपन्ती कालं यापयति स्म। प्रतिदिनं सा सुब्रह्मण्यमन्दिरं गत्वा प्रार्थयति स्म– "भगवन्! कदा भवान् स्वदर्शनेन माम् अनुगृह्णाति? कदा वा मम गृहम् आगत्य भोजनादिकं स्वीकरिष्यति? मयि कृपया करुणां प्रदर्शयतु" इति।

पार्वत्या क्रियमाणाम् एतां प्रार्थनाम् अर्चकः प्रतिदिनं शृणोति स्म, पश्यति स्म च। कदाचित् पार्वती यदा देवं यथापूर्वं प्रार्थितवती तदा विग्रहस्य पृष्ठतः स्थित्वा अर्चकः उक्तवान्– "भक्ते! भवत्याः भक्त्या अहं सन्तुष्टः अस्मि। अद्य सूर्यास्तसमये भवत्याः अभीष्टं पूरयिष्यामि" इति।

एतत् वचनं सुब्रह्मण्येश्वरस्य मुखात् एव निर्गतम् इति चिन्तितवत्याः पार्वत्याः महान् सन्तोषः जातः। सा झटिति गृहं गतवती। गृहं स्वच्छीकृत्य भगवतः भोजनार्थं पायस-लड्डुकादीनि विविधानि खाद्यानि सज्जीकृतवती। सायं सुब्रह्मण्यस्य प्रतीक्षां कुर्वती उपविष्टवती च।

सायं कश्चन भिक्षुकः– "जय जय सुब्रह्मण्य!" इति वदन् पार्वत्याः गृहस्य पुरतः आगत्य स्थितवान्। एतत् दृष्ट्वा पार्वती चिन्तितवती यत् देवः सुब्रह्मण्यः एव एतेन रूपेण आगत्य स्थितः अस्ति इति। अतः सा तं सादरम् उक्तवती– "आगच्छतु स्वामिन्! अन्तः उपविशतु। मन्दभाग्यायाः मम आतिथ्यं स्वीकरोतु कृपया" इति।

एतत् श्रुत्वा भिक्षुकः आश्चर्येण उक्तवान्– "अम्ब! अहं कश्चन भिक्षुकः।

"केरलीया जानपदकथा"



भिक्षां प्राप्तुम् आगतः च'' इति। किन्तु एतत् वचनम् अश्रुतवती इव पार्वती तम् अनुरोधपूर्वकम् अन्तः नीत्वा भोजनार्थम् उपवेशितवती। तस्य पुरतः विविधानि खाद्यवस्तूनि परिवेषितवती च।

एषा वस्तुस्थितिः उत स्वप्नः इति अजानन् भिक्षुकः भोजनम् आरब्धवान्। खाद्यानि तु नितरां रुचिकराणि आसन्। सन्तोषम् अनुभवन् भोजनं कृतवान् भिक्षुकः।

यदा भिक्षुकः भोजनं कुर्वन् आसीत् तदा पार्वती भक्त्या स्तोत्राणि गीतवती। यदा सूर्यः अस्तं गतः तदा दीपैः आराधनं कृतवती च। तावता द्वारताडनशब्दः तया श्रुतः। यदा तया द्वारम् उद्घाटितं तदा सुब्रह्मण्यवेषेण सम्यक् अलङ्कृतः अर्चकः दृष्टः। सः साक्षात् सुब्रह्मण्यः इव एव भासते स्म। एतं दृष्ट्वा पार्वती ज्ञातवती यत् भिक्षुकः वस्तुतः सत्यम् एव उक्तवान् आसीत् इति। स्वमूर्खतार्थं खेदम् अनुभवन्ती सा अन्तः गत्वा भिक्षुकम् अन्धकारमये अट्टे उपवेशितवती।

अनन्तरं सा अर्चकम् अन्तः आनीय भोजनं परिवेषितवती। व्यजनादिना सेवाम् अपि कृतवती। 'भगवतः कृपा प्राप्ता चेत् अहं धन्या' इति भावयन्ती सा भगवतः स्तोत्राणि गीतवती।

अत्रान्तरे बहिः अश्वस्य खुरपुटध्वनिः श्रुतः। पार्वत्याः पतिः अश्वम् आरुह्य आगच्छन् आसीत्। एतत् ज्ञात्वा पार्वती भगवद्रूपिणम् अर्चकं नमस्कारपूर्वकं निवेदितवती– ''स्वामिन्! मम पतिः भगवति विश्वासवान् न। सः कोपशीलः अपि। यावत् सः शान्तः न भवति तावत् भवान् निलीय तिष्ठतु कृपया'' इति। अनन्तरं सा अर्चकम् अट्टस्य उपरिभागं प्रापितवती।

बहिः गमनार्थं कोऽपि मार्गः तु न आसीत्। अतः अर्चकः अट्टे भूमौ एव शयनं कृतवान्। भिक्षुकः अपि तत्रैव शयनं कृत्वा निद्रां कृतवान् आसीत्। अर्चकस्य आगमनं शयनं वा तेन न ज्ञातम्। अर्चकः अपि झटिति निद्रां प्राप्तवान्।

पार्वती पतिं भोजनार्थम् उपवेशितवती। भोजनसमये पतिः पार्वतीं पृष्टवान्– ''अद्य

कः विशेषः। बहूनि खाद्यानि सज्जीकृतानि खलु?" इति।

तदा पार्वती उक्तवती– "अद्य भवान् आगमिष्यति इति वार्ता स्वप्ने ज्ञाता मया। अतः एतानि सर्वाणि सज्जीकृतवती" इति।

एतेन उत्तरेण पार्वत्याः पतिः सन्तुष्टः। सः भोजनानन्तरं विश्रान्तिसुखं किञ्चित् अनुभूय निद्रां कृतवान्।

मध्यरात्रसमये अट्टे शयनं कृतवता भिक्षुकेण पिपासा अनुभूता। अतः सः उच्चस्वरेण उक्तवान्– "पिपासा! पिपासा! जलम् आवश्यकम्" इति।

एतत् श्रुतवतः पार्वतीपत्युः निद्रा भग्ना। पार्वतीम् उत्थाप्य सः पृष्टवान्– "कः ध्वनिः सः?" इति।

तदा पार्वती उक्तवती– "वयं श्राद्धादि पितॄन् न तर्पयामः खलु? अतः पितरः तथा आक्रोशनं कुर्वन्ति" इति।

एतत् सत्यम् इति भावयन् पार्वत्याः पतिः रामचन्द्रः उच्चस्वरेण उक्तवान्– "भोः पितरः! यत् कर्म करणीयं तत्सर्वं यथाविधि करिष्यामि अहम्। कृपया इदानीं मां क्षाम्यन्तु" इति।

भिक्षुकस्य तु महती पिपासा आसीत्। अतः सः क्षणकालस्य अनन्तरं पुनः उच्चध्वनिना उक्तवान्– "अहो पिपासा!" इति।

तदा पार्वती अट्टस्य दिशि परिवृत्य उक्तवती– "भगवन्! पूर्वस्यां दिशि नारिकेलानि सन्ति। तत्रैव कश्चन शिलाखण्डः अपि अस्ति। नारिकेलं



भञ्जयित्वा प्राप्तेन जलेन पिपासां निवारयतु। कृपया शान्तः भवतु'' इति।

भिक्षुकः एतस्य वचनस्य तात्पर्यम् अवगतवान्। अन्धकारे एव इतस्ततः हस्तं सञ्चाल्य नारिकेलं प्राप्तवान् सः। ततः सः शिलाखण्डार्थम् अन्वेषणं कृतवान्। पार्श्वे एव शयनं कृतवतः अर्चकस्य शिरः तेन स्पृष्टम्। तत् शिरः गोलाकारकं शिलाखण्डं भावितवान् सः। अतः सः नारिकेलं गृहीत्वा बलात् कुट्टितवान्।

''अहो, मृतोऽहम्। मृतोऽहम्'' इति उच्चैः आक्रन्दनं कुर्वन् उत्थितवान् अर्चकः। तावता तेन भिक्षुकस्य हस्तः प्राप्तः। हस्तं गृहीत्वा मुष्ट्या तं ताडितवान् अर्चकः। भिक्षुकः प्रतिताडितवान्। एवम् अन्धकारमये अट्टे महान् कलहः उत्पन्नः।

अधः शयानः रामचन्द्रः एतत्सर्वं श्रुत्वा नितरां भीतः। एतत्सर्वं प्रेतात्मनां कार्यम् इति भावितवान् सः। तदा पार्वती पतिम् उक्तवती– ''अहो, पितॄणां कोपः! प्रतिदिनम् अहं तान् वदन्ती आसं यत् यावत् मम पतिः न प्रत्यागमिष्यति तावत् शान्ततया स्थातव्यम् इति। तैः भवतः आगमनं ज्ञातम् इति भाति। अतः ते उग्ररूपं धृतवन्तः सन्ति'' इति।

परस्परं कलहं कुर्वन्तौ अर्चकः भिक्षुकः च युगपत् अधः पतितवन्तौ। 'धम्' इति महान् शब्दः श्रुतः अपि। 'कुपिताः पितरः इदानीं यत्किमपि कर्तुम् अपि अर्हन्ति' इति आलोच्य रामचन्द्रः झटिति शय्यातः उत्थाय अश्वम् आरुह्य कशया अश्वं वेगेन ताडितवान्। ताडनसमये कशायाः अग्रभागः तस्य पृष्ठभागे किञ्चित् लग्नः। तदा सः– 'पितृदेवा माम् अनुसरन्तः ताडयन्तः सन्ति' इति आलोच्य– ''भोः पितरः! इतः परं भवतां तर्पणे कदापि प्रमादं न करिष्यामि। कृपया क्षाम्यन्तु'' इति वदन् ततः धावितवान्।

पार्वती भिक्षुकम् अर्चकं च गृहात् बहिः प्रेषितवती। 'मया महत्या भक्त्या पूजादिकं कृतं चेदपि भगवान् किमर्थं कुपितः सन् एवम् अपायं पातितवान्' इति न ज्ञातवती पार्वती।






यदा सूर्यः उदयाचलम् आगतवान् तदा वानरसेना-रावणसेनयोः युद्धम् आरब्धम्। राक्षसाः बाण-परिघ-खड्गादिभिः वानरान् प्रहृतवन्तः। वानराश्च वृक्षैः महाशिलाभिः च राक्षसान् प्रहृतवन्तः। उभयोः अपि पक्षयोः योद्धॄणां शरीरात् या रक्तधारा निर्गता सा रणभूमिं पङ्कमयीम् अकरोत्।

ये राक्षसाः वानरसेनामध्यम् आगत्य संहारकार्ये मग्नाः आसन् तान् उद्दिश्य सेनायाः मध्ये तिष्ठन् रामः, बाणवर्षणं कृतवान्। एतेन राक्षसाः नितरां भीताः। रामस्य बाणाः कुतः निर्गच्छन्ति, कदा निर्गच्छन्ति इति ज्ञातुं न शक्तवन्तः ते। बाणानाम् आगमनसमये उत्पन्नस्य वायोः कारणतः यदा महान्तः अपि वृक्षाः कम्पिताः भवन्ति तदा राक्षसाः ऊहन्ते स्म यत् रामबाणाः आगताः इति। प्रलयकालीनः वायुः इव रामबाणाः सञ्चरन्ति स्म। बहवः राक्षसाः संहृताः अभवन्।

तदा रामः स्वसमीपे स्थितान् सुग्रीव - विभीषण - जाम्बवद् - हनुमदादीन् उक्तवान्– "अहं यथा बाणप्रयोगं कुर्वन् अस्मि तथा कर्तुं अहं परशिवः च समर्थौ, न अन्ये" इति।

लङ्कायां स्थिताः राक्षस्यः युद्धे रामेण क्रियमाणं राक्षससंहारं ज्ञातवत्यः। ताः उच्चैः रोदनं कुर्वत्यः विनाशस्य मूलकारणं शूर्पणखां बहुधा निन्दितवत्यः। 'सा पापिनी किमर्थं वा रामं दृष्टवती? किमर्थं वा सा रामम् इष्टवती? शूर्पणखायाः वचनम् अङ्गीकुर्वन्



रामः किमर्थं वा सीताम् अपहृतवान्? किमर्थं वा सः रामस्य शत्रुतां सम्पादितवान्? यदि सीता रावणवशा अभविष्यत् तर्हि अपि एषा घटना घटिता न अभविष्यत्। यदा विराधवधः जातः तदा वा रावणेन विवेकः प्राप्तव्यः आसीत्। अन्ते रामस्य एव जयः भविष्यति इत्येषा वस्तुस्थितिः रावणेन न अवगता एव। एतावती हानिः प्राप्ता चेदपि रावणेन विवेकः न प्राप्तः। अस्मान् सर्वाः दुःखसागरे मज्जयितुम् एव सः युद्धं कुर्वन् अस्ति। दुरभिमानकारणतः सः रावणः राक्षसकुलनाशम् अपि तृणाय मन्यते। धिक् रावणम्! धिक् रावणस्य अविवेकिताम्!' इत्येवं वदन्त्यः राक्षस्यः मृतं पतिं पुत्रं सहोदरं वा स्मरन्त्यः रोदनं कृतवत्यः।

रामः दावानलः इव राक्षसान् संहरन् अग्रे आगच्छन् आसीत्। तस्मिन् एव समये रावणः स्वपार्श्वे स्थितानां महोदर-महापार्श्व-विरूपाक्षाणां पुरतः आत्मश्लाघनं कुर्वन् आसीत्– "यः खरं, कुम्भकर्णं, प्रहस्तम्, इन्द्रजितं च मारितवान् तं शत्रुम् अहं मारयिष्यामि। मम बाणाः भूमिम् आकाशं च अन्धकारमयं करिष्यन्ति। वानरसेनां च कदलीसस्यानि इव कर्तयिष्यन्ति" इति।

रावणः यं रथम् आरूढवान् आसीत् तं रथं अष्ट अश्वाः वहन्तः आसन्। रावणस्य मुखे घोरं राक्षसतेजः दृश्यते स्म। तस्य पार्श्वे महापार्श्वः, महोदरः, विरूपाक्षः, च रथम् आरुह्य स्थितवन्तः आसन्। रावणः दर्पेण वानरसेनां प्रविश्य घोरं युद्धम् आरब्धवान्।

येन क्रमेण रामः राक्षससेनायाः नाशं कृतवान् तेनैव क्रमेण रावणः वानरसेनां नाशयन् आसीत्। एतत् दृष्ट्वा सुग्रीवः वानरसेनारक्षणार्थं सुषेणम् आदिष्टवान्, स्वयं चापि युद्धार्थम् उद्युक्तः अभवत्। रणगर्जनं कुर्वन् सः महता वेगेन राक्षसान् अल्पेन एव कालेन संहरन् राक्षसेषु भीतिं जनितवान्। ततः राक्षसप्रमुखाणां संहारार्थं सः उद्युक्तः अभवत्।

एतत् दृष्ट्वा विरूपाक्षः रथात् अवतीर्य गजम् आरुह्य वानरसेनायाः मध्यभागं गतवान्। तत्र तेन सुग्रीवः दृष्टः। सः

निरन्तरबाणप्रयोगेण सुग्रीवं व्रणितं कृतवान्। तदा क्रुद्धः सुग्रीवः झटिति एकं महान्तं वृक्षम् उत्पाट्य तेन विरूपाक्षं शिरसि प्रहृतवान्। एतेन घोरप्रहारेण विरूपाक्षः गजात् अधः अपतत्।

विरूपाक्षः झटिति उत्थाय खड्गं बाणवारकं च गृहीत्वा युद्धार्थं सन्नद्धः जातः। अनन्तरं सः खड्गेन सुग्रीवं प्रहृतवान्। सुग्रीवः प्रतिप्रहारं कृतवान्। सुग्रीव-विरूपाक्षयोः युद्धं दीर्घकालं यावत् प्रवृत्तम्। क्रमशः सुग्रीवस्य शौर्यं प्रवृद्धम्। सुग्रीवः विरूपाक्षं तथा प्रहृतवान् यत् विरूपाक्षस्य नासिकातः मुखतः च रक्तधारा निर्गता। अन्ते रक्तं वमन् विरूपाक्षः भूमौ पतितवान्, प्राणैः वियुक्तः अभवत् च।

विरूपाक्षस्य मरणं ज्ञात्वा रावणः वानराणां संहारार्थं महोदरं प्रेषितवान्। वानरसेनां संहरन् यदा महोदरः अग्रे आगतवान् तदा सुग्रीवः तं सम्मुखीकृतवान्। सः एकं परिघायुधम् उन्नीय महोदरस्य रथस्य अश्वान् मारितवान्। एतेन महोदरस्य मुखं कोपेन आरक्तं जातम्। सः आपादमस्तकं कम्पमानः रथात् अवतीर्णः। गदाम् उन्नीय सः वीरगर्जनं कुर्वन् सुग्रीवेण सह युद्धार्थम् अग्रे आगतवान्।

सुग्रीवस्य हस्ते स्थितं परिघायुधं महोदरस्य हस्ते स्थिता गदा च घट्टनेन अधः अपतताम्। ततः तयोः मुष्टियुद्धम् आरब्धम्।



समबलौ तौ एतेन युद्धेन नितरां श्रान्तौ। अनन्तरं रणरङ्गे यत् आयुधं लब्धं तत् गृहीत्वा परस्परं ताडितवन्तौ। अत्रान्तरे महोदरहस्तस्थः खड्गः सुग्रीवहस्तस्थे बाणवारके सुदृढं लग्नम् अभवत्। यदा महोदरः बलात् तं खड्गम् आक्रष्टुं प्रयतमानः आसीत् तदा सुग्रीवः विद्युद्वेगेन खड्गं चालयन् महोदरस्य शिरः कर्तितवान्। एवं महोदरः गतप्राणः जातः।

अपरत्र महापार्श्वः अङ्गदसेनायाः उपरि आक्रमणं कृतवान् आसीत्। एतत् दृष्ट्वा कुपितः अङ्गदः समीपस्थम् एकं लोहगोलकम् उन्नीय महापार्श्वम् उद्दिश्य क्षिप्तवान्। एतस्य प्रहारेण महापार्श्वः तस्य



सारथिः च रथे एव अपतताम्। तत्समये एव गवाक्षः जाम्बवान् च तत्र आगतवन्तौ। महाशिलानां क्षेपणेन महापार्श्वस्य रथं चूर्णीकृतवन्तौ च। रथस्य अश्वाः अपि ताभ्यां मारिताः।

अत्रान्तरे महापार्श्वः सचेतनः जातः। सः झटिति उत्थाय जाम्बवन्तं गवाक्षं च उद्दिश्य बाणवर्षणं कर्तुम् उद्युक्तः अभवत्। एतत् दृष्ट्वा अङ्गदः कोपेन एकं परिघायुधम् उन्नीय क्षिप्तवान्। ततः आत्मानं रक्षन् महापार्श्वः यदा पार्श्वे गतवान् तदा अङ्गदः अपि तत्र गतवान्। अल्पकालं यावत् युद्धं कृत्वा सः मुष्टिप्रहारेण महापार्श्वं यमसदनं प्रेषितवान्।

इदानीम् अनन्यगतिकतया रावणः युद्धार्थम् उद्युक्तः अभवत्। सामान्यैः वानरैः सह युद्धं कर्तुं न इच्छति रावणः। सः तामसास्त्रं प्रयुज्य सर्वान् वानरान् स्वमार्गात् अपसारितवान्। तच्च अस्त्रं प्रचण्डम् आसीत्। तस्य स्पर्शतः बहवः वानराः व्रणिताः अभवन्। वानराः ततः पलायनार्थम् उद्युक्ताः अभवन्। एतत् दृष्ट्वा रामः सन्नद्धः सन् अग्रे प्रस्थितवान्। छाया इव तम् अनुसरन् लक्ष्मणः अपि ततः प्रस्थितवान्।

रावणम् उद्दिश्य लक्ष्मणः अस्त्राणि प्रयुक्तवान्। तानि तु लीलया एव खण्डितवान् रावणः। ततः सः रामम् उद्दिश्य बाणान् प्रयुक्तवान्। रामः तान् विनायासं खण्डितवान्। ततः राम-रावणयोः घोरं युद्धम् आरब्धम्। परस्परम् अस्त्रप्रत्यस्त्रप्रयोगं कुर्वन्तौ, प्रतिस्पर्धिना प्रयुक्तम् अस्त्रं खण्डयन्तौ, शौर्येण हूङ्कारं कुर्वन्तौ च तौ घोरं युद्धं कृतवन्तौ।

रावणः रामं लक्ष्यीकृत्य आसुरास्त्रं प्रयुक्तवान्। एतत् तु अपायकारि अस्त्रम्। रामः आग्नेयास्त्रं प्रयुज्य तत् अस्त्रं नाशितवान्। एतत् दृष्ट्वा सुग्रीवादयः वानरप्रमुखाः नितरां सन्तुष्टाः।

ततः रावणः रौद्रास्त्रस्य प्रयोगं कृतवान्। रामः गान्धर्वास्त्रं प्रयुज्य रौद्रास्त्रं नाशितवान्। एतत् दृष्ट्वा रावणः सौरास्त्रं प्रयुक्तवान्। एतत् अस्त्रम् अपि रामः



विभीषणम् उद्दिश्य एकं शक्त्यायुधं क्षिप्तवान्। किन्तु तत्रैव स्थितः लक्ष्मणः स्वकीयेन अस्त्रेण तत् आयुधं त्रिधा खण्डयित्वा अधः पातितवान्।

तदा रावणः परमशक्तियुक्तं शक्त्यायुधं गृहीतवान्। एतत् दृष्ट्वा लक्ष्मणः ज्ञातवान् यत् विभीषणस्य उपरि विपत् आपतिष्यति इति। अतः सः झटिति विभीषणस्य पुरतः गत्वा विभीषणं कवचः इव रक्षन् स्थितवान्। अनन्तरं रावणम् उद्दिश्य निरन्तरं बाणवर्षणं कुर्वन् लक्ष्मणः, रावणः तत् शक्त्यायुधं प्रयोक्तुम् अवकाशं यथा न प्राप्नुयात् तथा कृतवान्।

तदा रावणः लक्ष्मणम् उद्दिश्य– "अये अविवेकिन्! लक्ष्मण! विभीषणस्य रक्षणं कर्तुम् इच्छन् भवान् मम अग्रे आगत्य स्थितवान् खलु? यावत् शरीरे प्राणाः भवेयुः तावत् एव खलु भवान् विभीषणं रक्षितुं शक्नुयात्? पश्यतु इदानीम्। मम एतत् शक्त्यायुधं भवतः प्राणान् एव पास्यति" इति उक्त्वा लक्ष्मणं लक्ष्यीकृत्य शक्त्यायुधं प्रयुक्तवान् एव।

एतत् दृष्ट्वा रामः झटिति शापं दत्तवान्– "भोः शक्त्यायुध! भवान् शक्तिहीनः भवतु" इति। तथापि शक्त्यायुधस्य गमनं न स्थगितम्। लक्ष्मणस्य हृदये प्रविष्टं सत् तत् बहिः आगत्य अधः अपतत्। रामः क्रोधेन दुःखेन च तत् अस्त्रं गृहीत्वा भञ्जितवान्।

स्वकीयेन प्रत्यस्त्रेण शक्तिहीनं कृतवान्।

एवम् अस्त्र-प्रत्यस्त्रप्रयोगेण राम-रावणयोः युद्धं निरन्तरं प्रवर्तमानम् आसीत्। रामः विविधानाम् अस्त्राणां प्रयोगेण रावणं व्रणितं कृतवान्। ततः सः विश्रान्त्यर्थम् अस्त्रप्रयोगं किञ्चित्कालं स्थगितवान् च।

तदा लक्ष्मणः युद्धार्थम् उद्युक्तः अभवत्। सः प्रथमं रावणरथस्य ध्वजं पातितवान्। ततः रावणसारथिं परलोकं प्रेषितवान्। अनन्तरं रावणस्य धनुः चूर्णीकृतवान् अपि।

यदा लक्ष्मणः युद्धं स्थगितवान् तदा विभीषणः युद्धं कर्तुम् उद्युक्तः जातः। सः गदया प्रहृत्य रावणस्य रथस्य अश्वान् मारितवान्। एतत् दृष्ट्वा क्रुद्धः रावणः

रावणः तु रामं लक्ष्यीकृत्य निरन्तर बाणप्रयोगं कुर्वन् एव आसीत्। रामः तान् बाणान् तृणाय मन्यमानः हनूमन्तं सकृत् आलिङ्ग्य सुग्रीवहनूमदादीन् उद्दिश्य उक्तवान्– "भवन्तः लक्ष्मणस्य रक्षणं कुर्वन्तु। अहं रावणेन सह युद्धम् अनुवर्तयिष्यामि" इति।

रामः यद्यपि एवम् उक्तवान्, तथापि लक्ष्मणस्य दयनीयां स्थितिं पश्यतः तस्य युद्धासक्तिः क्षीयमाणा आसीत्। एतत् जानन् सुषेणः रामम् उक्तवान्– "लक्ष्मणविषये भवतः चिन्ता मास्तु। सः जीवति। तस्य रक्षणोपायं वयं चिन्तयिष्यामः" इति। अनन्तरं सः हनूमन्तं पश्यन् उक्तवान्– "पूर्वं भवान् यम् ओषधिपर्वतम् अत्र आनीतवान् आसीत् तस्य दक्षिणभागस्थे शिखरे स्थितानि ओषधिसस्यानि इदानीम् आनयतु। अविलम्बेन एतत् करणीयं भवता। अन्यथा लक्ष्मणस्य प्राणापायः स्यात्।झटिति प्रस्थानं करोतु" इति।

लक्ष्मणः क्षणमात्रेण ओषधिपर्वतस्य समीपं गतवान्। किन्तु आवश्यकम् ओषधिसस्यम् अभिज्ञातुं न शक्तवान् सः। अतः सः पर्वतशिखरम् एव उत्पाट्य आनीतवान्। ततः सुषेणम् उक्तवान् सः– "भवता सूचितम् ओषधिसस्यम् अभिज्ञातुम् अहं न शक्तवान्। अतः पर्वतशिखरम् एव उत्पाट्य आनीतवान् अस्मि। इतः यत्



ओषधिसस्यम् आवश्यकं तत् स्वयं स्वीकरोतु" इति।

सुषेणः हनूमतः पराक्रमं विवेकितां च प्रशंस्य आवश्यकम् ओषधिसस्यम् उत्पाट्य, निष्पीड्य प्राप्तं रसं लक्ष्मणस्य नासिकायां स्थापितवान्। तदा लक्ष्मणः संचेतनतां प्राप्य उत्थितवान्।

एतत् दृष्टवतः रामस्य नेत्राभ्याम् आनन्दाश्रूणि निर्गतानि। सः लक्ष्मणं प्रीत्या दृढम् आलिङ्ग्य उक्तवान्– "लक्ष्मण! भवतः उज्जीवनतः मम मनः स्वस्थं जातम्। यदि भवान् मरणं प्राप्तवान् स्यात् तर्हि एतेन युद्धेन किं वा साधितम् अभविष्यत्? सीतायाः प्राप्त्या वा किम् अभविष्यत्? सर्वं व्यर्थम्

अभविष्यत् खलु?" इति।

तदा लक्ष्मणः उक्तवान्– "अग्रज! सामान्येन इव भवता एवं न चिन्तनीयम्। रावणं संहृत्य विभीषणं लङ्काधिपतिं करिष्यामि इति भवता प्रतिज्ञा कृता अस्ति। अतः सा प्रतिज्ञा मिथ्या यथा न स्यात् तथा प्रयत्नः करणीयः भवता। रावणसंहारार्थं प्रथमम् उपायः चिन्तनीयः। ततः लङ्काधिपतित्वेन विभीषणस्य पट्टाभिषेकः निर्वर्तनीयः। एतत्सन्दर्भे भवता अन्यत् किमपि न चिन्तनीयम्। लाभालाभादीनां चिन्तनम् अन्ते करवाम। अद्य सूर्यास्ततः पूर्वं रावणस्य वधं कर्तुं प्रयत्नः करणीयः" इति।

एतत् श्रुत्वा रामः विना वचनं धनुः उन्नीतवान्। रावणं लक्ष्यीकृत्य बाणान् प्रयोक्तुम् उद्युक्तः अभवत् च।

राम-रावणयोः युद्धे काचित् न्यूनता दृश्यते स्म। रावणः सुसज्जिते रथे स्थित्वा युद्धं कुर्वन् आसीत्। किन्तु उचितस्य रथस्य अभावतः रामः भूमौ स्थित्वा युद्धं करोति स्म। एतां न्यूनतां निवारयितुम् इच्छन् इन्द्रः सारथिना मातलिना सहितं स्वकीयं रथं रामाय प्रेषितवान्। स च रथः वज्रवैढूर्यादिभिः अलङ्कृतः आसीत्। सुवर्णपत्रावरणे रमणीयानि चित्राणि चित्रितानि आसन्। रथः उदयमानः सूर्यः इव विराजते स्म।

मातलिः साक्षात् रामस्य समीपम् आगत्य उक्तवान्– "आर्य! भवतः जयम् अभिलषन् इन्द्रः एतं रथं प्रेषितवान् अस्ति। तथैव अपूर्वं धनुः, कवचं, बाणान्, शक्त्यायुधानि चापि प्रेषितवान् अस्ति सः। एतं रथम् आरुह्य एव पूर्वम् इन्द्रः दानवान् संहृतवान् आसीत्। तत्समये अहम् एव सारथिः आसम्। इदानीम् अपि अहं सारथ्यं निर्वहामि। भवान् एतस्मिन् स्थित्वा युद्धं कुर्वन् रावणं संहरतु" इति।

मातलेः वचनं श्रुत्वा रामः सन्तुष्टः सन् प्रदक्षिणपूर्वकं रथं नमस्कृत्य आरूढवान्। ततः राम-रावणयोः युद्धं पुनः आरब्धम्। एतत् अपूर्वं युद्धं देवाः सर्वे महत्या आसत्या कुतूहलेन च दृष्टवन्तः।



# अर्धसफला युक्तिः

बगदादनगरं पूर्वं नूरशाहः नाम राजा पालयन् आसीत्। सः विनोदप्रियः प्रजावत्सलः च आसीत्। कदाचित् राजधान्याः श्रेष्ठः वणिक् रहमतुल्लः दिवङ्गतः। सः एकाकी आसीत्। तस्य सम्पत्तेः उत्तराधिकारी कोऽपि न आसीत्। अतः रहमतुल्लस्य समग्रा सम्पत्तिः राजाधीना जाता।

बगदादनगरे अब्दुल्लः नाम कश्चन निर्धनः तरुणः निवसति स्म। सः चतुरमतिः आसीत्। 'केनापि उपायेन रहमतुल्लस्य सम्पत्तिः स्वायत्तीकरणीया' इति चिन्तयित्वा सः राजास्थानं प्रति गतवान्। महता विनयेन राजानं नमस्कृत्य उक्तवान् सः– "प्रभो, अस्माकं नगरस्य वणिजः रहमतुल्लस्य अकालमृत्योः अनन्तरं तस्य उत्तराधिकारी कोऽपि नास्ति इति कारणतः, तदीया सम्पत्तिः कोषागारं प्रति आनीता। वस्तुतः सः एकाकी। अहम् अपि एकाकी। यस्य मातापितृ-बन्धुबान्धवाः न भवन्ति सः 'भगवतः सन्तानः' इति उच्यते। एवम् अहं रहमतुल्लः च भगवतः पुत्रौ। तन्नाम रहमतुल्लः मम अग्रजः जातः। स च अग्रजः इदानीं मृतः अस्ति। ततः तदीयसम्पत्तेः उत्तराधिकारी अहं जातः। अतः अहं विनयेन प्रार्थयामि यत् रहमतुल्लस्य सम्पत्तिः, कोषागारं प्रति या आनीता सा, मह्यं दातव्या इति" इति।

तदा राजा मन्दहासपूर्वकं– "भवता युक्तम् एव उक्तम्। अग्रजस्य सम्पत्तेः भागः प्राप्यते भवता" इति अब्दुल्लम् उक्त्वा कोषाध्यक्षम् आहूय आज्ञापितवान्– "रहमतुल्लस्य सम्पत्तितः एकं दीनारम् एतस्मै तदनुजाय अब्दुल्लाय आनीय ददातु" इति।

राज्ञः वचनं श्रुत्वा आश्चर्येण पृष्टवान् अब्दुल्लः– "एकदीनारमात्रम्!" इति।

"आम्। रहमतुल्लस्य यथा भवान् सहोदरः तथा सहोदराः अस्मद्देशे बहवः सन्ति। यतः अनाथाः सर्वे तत्सहोदराः एव भवन्ति खलु? तैः अपि भागः प्राप्तव्यः एव खलु?" इति हसन् उक्तवान् राजा।

एतत् श्रुत्वा अब्दुल्लः मौनम् आश्रितवान्। राज्ञा दापितम् एकं दीनारं स्वीकृत्य सः स्वगृहं गतवान्। किन्तु अल्पे एव काले कश्चन राजभटः सहस्रं दीनारान् उपायनरूपेण अब्दुल्लाय दत्त्वा गतवान्। एवम् अब्दुल्लः स्वचातुर्ययुक्तवचनेन प्रभूतं धनं न प्राप्तवान् चेदपि दारिद्र्यनिवारणार्थं यावत् आवश्यकं तावत् तु प्राप्तवान् एव।





# पूर्णिमापिशाचः

मधुपुर्याः पार्श्वे किञ्चन अरण्यम् आसीत्। अरण्यसीमायां शिवशरणः नाम कश्चन काष्ठविक्रेता निवसति स्म। तस्य द्वे पुत्र्यौ – चम्पा चन्द्रिका चेति। चम्पा यदा एकवर्षीया आसीत् तदा एव तदीया माता दिवङ्गता आसीत्। तदा शिवशरणः दुर्गानामिकां पुनः परिणीतवान् आसीत्। दुर्गायाः पुत्री चन्द्रिका।

दुर्गा कठोरहृदया आसीत्। बहुप्रकारैः सा चम्पां प्रतिदिनं पीडयति स्म। प्रतिपदं चम्पया विमातुः निन्दनं श्रोतव्यं भवति स्म। एतेन नितरां खिन्ना चम्पा भगवन्तं प्रार्थयति स्म यत् यावच्छीघ्रं मम विवाहार्थम् अवकाशं कल्पयतु, येन अहं विमातृपीडातः निर्मुक्ता भवेयम् इति।

कस्याञ्चित् पूर्णिमायाः रात्रौ चम्पा जागरणं प्राप्तवती। यावत् सा उत्थाय गृहात् बहिः गन्तुम् उद्युक्ता तावता मातापित्रोः वार्तालापं श्रुतवती।

"पुत्र्यौ प्राप्तवयस्के जाते। अतः एतस्मिन् वर्षे चम्पायाः विवाहः निर्वर्तनीयः एव" इति उक्तवान् शिवशरणः।

एतत् श्रुत्वा दुर्गा कठोरस्वरेण उक्तवती– "भवान् भ्रष्टमतिः तु न खलु? यदि चम्पा पतिगृहं प्रेष्येत तर्हि अत्र गृहकार्याणि का वा कुर्यात्? अतः प्रथमं चन्द्रिकायाः विवाहस्य विषये चिन्तयतु। चम्पायाः विवाहस्य प्रयत्नम् अहं सर्वथा न सहे" इति।

एतत् श्रुतवत्याः चम्पायाः दुःखम् उद्गतम्। 'इतः मोक्षः एव नास्ति मम। आजीवनं मया अत्रैव स्थातव्यं भवेत्। अत्र प्रतिदिनं कष्टसहनस्य अपेक्षया क्रूरजीविनः आहारत्वप्राप्तिः एव वरम्' इति निश्चित्य सा अन्धकारे एव गृहात् निर्गतवती। घोरम् अरण्यं प्रविष्टवती च।

किन्तु अरण्ये तया क्रूरजन्तुः कोऽपि न

प्राप्तः। गमनसमये कुत्रचित् कश्चन पुरातनः कूपः दृष्टः। 'अत्र पतनेन अहम् इहलोकव्यापारं समापयिष्यामि' इति आलोच्य चम्पा कूपसमीपं गतवती। तावता वृक्षस्य उपरि स्थितः कश्चन पिशाचः तस्याः पुरतः आगत्य स्थित्वा उच्चस्वरेण अवदत्– "अये, अलम् अविवेककृत्येन" इति।

पिशाचदर्शनतः चम्पा किञ्चिदपि न भीता। सा धैर्येण पिशाचं पृष्टवती– "मां मरणात् निवारयन् भवान् कः?" इति।

पिशाचः स्वस्य परिचयम् उक्त्वा चम्पायाः दुःखस्य कारणं प्रीत्या अपृच्छत्। चम्पा स्वगृहकष्टं निवेद्य अश्रूणि स्रावयन्ती उक्तवती– "विमातुः निन्दनस्य श्रवणस्य अपेक्षया मरणम् एव वरम्" इति।

"अये, धिक् भवत्याः चिन्तनम्। अल्पस्य निमित्तं जीवने एवं जुगुप्सा सर्वथा अनुचिता। क्षणं तिष्ठतु तावत्" इति उक्त्वा पिशाचः कूपं प्राविशत्। अल्पे एव काले प्राचीनपात्रम् आनीय चम्पायै दत्तवान् च।

"एतत् मह्यं किमर्थम्?" इति आश्चर्येण पृष्टवती चम्पा।

"यदि एतत् भवत्याः समीपे स्यात् तर्हि विमातुः निन्दनात् अपि भवत्याः सन्तोषः एव न भवेत्। यतः यदा यदा सा निन्दति तदा तदा एतस्मिन् पात्रे एकैकं सुवर्णनाणकम् उद्भवति। एवं प्राप्तेन धनेन भवत्याः विवाहः सवैभवं प्रचलेत्। किन्तु स्मर्तव्यं यत्



पात्रस्य महिमा एकदिनमात्रं स्थास्यति इति" इति उक्तवान् पिशाचः।

चम्पा पिशाचं कृतज्ञतावचनानि उक्त्वा स्वगृहं प्रतिगतवती। पिशाचेन दत्तं पात्रं गोष्ठे तृणानां मध्ये स्थापितवती। ततः स्वस्थानं गत्वा शयनं कृतवती च।

अनन्तरदिने प्रातः दुर्गा कोपेन चम्पायाः समीपम् आगत्य– "अये, अलसशिखामणे! उत्तिष्ठतु रे। उत्थाय झटिति गत्वा गोष्ठं स्वच्छीकृत्य क्षीरं दुग्ध्वा आगच्छतु तावत्" इति आज्ञापितवती।

'विमातुः प्रथमं निन्दनम् एतत्' इति चिन्तयन्ती चम्पा गोष्ठं गत्वा तृणानां मध्ये स्थापितस्य पात्रस्य आवरणम् अपनीय



दृष्टवती। तत्र एकं सुवर्णनाणकम् आसीत्।

सायङ्कालसमये पात्रे द्विशतात् अधिकानि सुवर्णनाणकानि सङ्गृहीतानि अभवन्। सायं चम्पा तानि सुवर्णनाणकानि पित्रे प्रदर्श्य— "पिशाचस्य अनुग्रहतः प्राप्तानि एतानि" इति उक्त्वा प्रवृत्तं सर्वं निवेदितवती।

तदा तत्रैव स्थिता दुर्गा उक्तवती— "मम निन्दावचनानां कारणतः प्राप्तानि एतानि सुवर्णनाणकानि मदीयानि एव भवन्ति। एतेन धनेन अहं चन्द्रिकायाः विवाहं सवैभवं निर्वर्तयिष्यामि" इति।

तदा शिवशरणः पत्न्याः प्रस्तावं निराकुर्वन् उक्तवान्— "एतत् तु अन्याय्यम्। एतत् समग्रं धनं चम्पायाः विवाहस्य निमित्तम् एव व्ययितं स्यात्, न तु अन्यस्य निमित्तम्" इति।

पत्युः विरोधं तृणीकृत्य दुर्गा सुवर्णनाणकानि रहसि स्थापितवती। शिवशरणः चम्पायाः विवाहस्य निमित्तं वरान्वेषणं कर्तुम् उद्युक्तः अभवत्।

पुनरपि पूर्णिमायाः रात्रिः आगता। रात्रौ किं किं करणीयम् इति सर्वं विस्तरेण निवेद्य दुर्गा पुत्रीं चन्द्रिकां प्राचीनकूपस्य समीपं प्रेषितवती। चम्पा इव चन्द्रिका अपि कूपे पतितुम् उद्युक्ता अभवत्। तदा तत्र पिशाचः प्रत्यक्षः जातः। "अहं मातुः निन्दनं श्रोतुम् अशक्नुवती आत्महत्यार्थम् उद्युक्ता" इति पिशाचम् उक्तवती चन्द्रिका।

तदा पिशाचः चम्पायै इव चन्द्रिकायै अपि एकं पात्रम् आनीय— "यदा माता निन्दति तदा अत्र सुवर्णनाणकानि उद्भवन्ति। पात्रस्य महिमा तु एकदिनमात्रम् एव स्थास्यति" इति असूचयत्।

चन्द्रिका महता सन्तोषेण पात्रं स्वीकृत्य गृहम् आगतवती।

तस्मिन् एव काले तद्देशीयः वृद्धः राजा एकमात्रपुत्रं विजयं तर्जनपूर्वकं वदन् आसीत्— "भोः, भवान् वस्तुतः विवाहम् इच्छति उत न इत्येव न ज्ञायते मया। एवं चेत् कथम्?" इति।

तदा युवराजः विजयः मन्दहासपूर्वकम् उक्तवान्— "तात! मया कदापि न उक्तं यत्

विवाहः मम अप्रियः इति। किन्तु काऽपि राजकुमारी मह्यं न अरोचत। अस्मद्राज्यस्य सीमायाम् अरण्ये निवसतः काष्ठविक्रेतुः पुत्र्यौ सुन्दर्यौ शीलवत्यौ च स्तः'' इति।

एतस्य श्रवणेन राजा ज्ञातवान् यत् मृगयानिमित्तम् अरण्यं गतः एषः काष्ठविक्रेतुः पुत्र्यौ दृष्ट्वा तयोः कस्याञ्चित् अनुरक्तः जातः इति। अतः सः उक्तवान्– ''वत्स! यदि काष्ठविक्रेतुः पुत्री एव भवते रोचते तर्हि ताम् एव परिणयतु। भवतः इच्छा यथा अस्ति तथैव भवतु नाम। काष्ठविक्रेतुः द्वे पुत्र्यौ इति खलु भवता उक्तम्? तयोः कतराम् इच्छति भवान्? वदतु तावत्'' इति।

तदा विजयः उक्तवान्– ''ते उभे अपि सुन्दर्यौ एव। तयोः कतरा योग्या इति तु परीक्ष्य ज्ञातव्यं भवति'' इति।

अनन्तरदिने युवराजः राजा च वेषान्तरं धृत्वा काष्ठविक्रेतुः गृहसमीपं गतवन्तौ। तदा सूर्योदयसमयः आसीत्। चम्पा गृहस्य पुरतः सम्मार्ज्य रङ्गवल्लीं लिखन्ती आसीत्।

अपरिचितयोः आगमनं दृष्ट्वा चम्पा मञ्चं प्रसार्य तौ उपवेशितवती, विनयेन उक्तवती च– ''भवन्तौ प्रायः मम पितुः दर्शनार्थम् आगतौ। किन्तु एतावता एव सः कार्यार्थं गृहात् निर्गतः अस्ति। सायङ्काले एव तस्य प्रत्यागमनम्। भवन्तौ मातरं किमपि वक्तुम् इच्छतः वा? सा अन्तः अस्ति'' इति।

तत्समये दुर्गा गृहस्य अन्तः पुत्र्याः



निरन्तरनिन्दने मग्ना आसीत्। एकं क्षणम् अपि व्यर्थं यापयितुं न इच्छति स्म सा।

चम्पा गृहस्य अन्तः गत्वा विमातरं निवेदितवती यत् उभौ अपरिचितौ आगतौ स्तः इति। तदा दुर्गा उक्तवती– ''तौ इतः निर्गच्छताम्। अद्य अहं नितरां कार्यव्यग्रा। यदि राजा एव मद्गृहम् आगच्छेत् तर्हि अपि वार्तालापार्थं मम समयः सर्वथा नास्ति। भवती एतं विषयम् उक्त्वा तौ प्रेषयतु'' इति।

चम्पा बहिः आगत्य– ''मम माता अद्य नितरां कार्यव्यग्रा। अतः बहिः आगत्य वार्तालापं कर्तुं न शक्नोति सा। कृपया क्षन्तव्याः वयम्'' इति विनयेन निवेदितवती।

''अस्तु तावत्। आवाम् इदानीं गच्छावः''

इति उक्त्वा राजा युवराजः च ततः निर्गतवन्तौ।

मार्गे राजा विजयम् उक्तवान्– "आवाभ्यां या दृष्टा सा तु योग्या एव। किन्तु आवाभ्याम् अपरा अद्य न दृष्टा। अतः श्वः पुनः आगच्छाव" इति।

तदा विजयः उक्तवान्– "किं श्वः पुनरागमनेन? या मातुः निरन्तरनिन्दनस्य पात्रं तस्याः दर्शनेन वा किम्? अतः श्वः आगमनस्य आवश्यकता नास्ति" इति।

अनन्तरदिने राज्ञः भटाः आगत्य काष्ठविक्रेतुः परिवारं सादरं राजधानीं नीतवन्तः। राजभवने ज्ञातं यत् युवराजः विजयः चम्पां परिणेतुम् इच्छति इति। तदा दुर्गा चम्पायाः हस्तौ गृहीत्वा क्षमां प्रार्थयन्ती उक्तवती– "मां क्षाम्यतु वत्से! मया भवती बहुधा पीडिता। औरसपुत्र्याः सुखमात्रम् इच्छन्ती अहं निर्दयतया, असूयया च व्यवहृतवती। तस्य परिणामः प्राप्तः मया। स्वसद्गुणैः भवती महाराज्ञीपदं प्राप्नुवती अस्ति। इतः परं चन्द्रिकां कश्चित् काष्ठविक्रेता तत्सदृशः अन्यः सामान्यः वा परिणयेत्। अहो दौर्भाग्यं मम" इति।

तदा चम्पा विमातरं सान्त्वयन्ती उक्तवती– "अम्ब! अलं खेदेन। योग्यं वरम् अन्विष्य अहं मम भगिन्याः विवाहं निर्वर्तयिष्यामि। चिन्तां मा करोतु" इति।

तदा तत्रैव स्थितः युवराजः विजयः उक्तवान्– "चम्पे! किं वदति भवती? अहम् एतस्य देशस्य भावी राजा अस्मि। मम भाविन्याः पत्न्याः भगिनीं कश्चित् सामान्यः यदि परिणयेत् तर्हि तत् कथं वा शोभेत? तां कश्चन राजकुमारः तत्तुल्यः वा परिणेष्यति। एतदर्थम् अहं व्यवस्थां करिष्यामि" इति।

अनन्तरं दुर्गां पश्यन् उक्तवान् सः– "अम्ब! भवती निश्चिन्ता भवतु। भवत्याः पुत्र्याः विवाहः सवैभवं प्रचलिष्यति। राजकुमारः तां परिणेष्यति" इति।

एतत् श्रुतवत्याः दुर्गायाः चन्द्रिकायाः च महान् सन्तोषः जातः।



# र स वा र्ताः



## अमेरिकान्वेष्टा फाह्यान्, न तु कोलम्बस्

५०० वर्षेभ्यः पूर्वम् इटलीनाविकः क्रिस्टोफर् कोलम्बस् अमेरिकादेशम् अन्विष्टवान् इति समग्रे प्रपञ्चे जनाः भावयन्ति। एतस्याः चारित्रिकघटनायाः ५०० तमः स्मारकोत्सवः गते डिसेम्बर्मासे १२ दिनाङ्के महता वैभवेन आचरितः अपि। किन्तु अमेरिकादेशम् आगतः लियान् युनुषान् नामकः चीनादेशीयः इतिहासज्ञः प्रतिपादयति— "चीनादेशीयः फाह्यान्नामकः बौद्धसंन्यासी (३३४-४२२), (यश्च चतुर्थे शतके भारतम् आगतवान् आसीत्) कोलम्बसूतः सहस्रवर्षेभ्यः पूर्वम् एव— तन्नाम ४१२ तमे वर्षे— एपोटीराज्ये पादार्पणं कृतवान् आसीत्" इति। एपोटीराज्यम् अमेरिकादेशे 'लास् एञ्जलिस्'समीपे आसीत्। १५०० वर्षेभ्यः पूर्वं लिखितायाः फाह्यान्-आत्मकथायाः घटनाः उदाहरन् लियान् यानुषान् अन्ताराष्ट्रिये कस्मिंश्चित् समावेशे एतम् अंशं प्रतिपादितवान्।



## दिनदर्शिकाबालकः

एतस्मिन् वर्षे गणराज्योत्सवः कदा आसीत्? मङ्गलवासरे। जनवरीप्रथमदिनाङ्कः कस्मिन् वासरे? शुक्रवासरे। १९९० तमवर्षस्य जनवरीप्रथमदिनाङ्कः कदा आसीत्? एतस्य उत्तरं वक्तव्यं चेत् दिनदर्शिका अवश्यं द्रष्टव्या एव ननु? किन्तु दिनदर्शिकायाः साहाय्यं विना एव अविनाशनटराजन्नामकः पञ्चवर्षीयः बालकः झटिति उत्तरं वदति यत् तच्च दिनं सोमवासरे आसीत् इति। मेधाविनम् एतं जनाः 'क्यालेण्डर् बाय्' (दिनदर्शिकाबालकः) इति वदन्ति। पञ्चमे वर्षे एव एवम् असाधारणमेधावितां प्रदर्शयन् एषः भाविनि काले कीदृशीं कीर्तिं प्राप्नुयात् इति तु न जानीमः।

## एकाकितया दक्षिणध्रुवं प्रति प्रयाणम्



१९९० तमे वर्षे नार्वेदेशीयः ऐलिङ्ग् कागेनामकः कश्चित् मित्रैः सह मिलित्वा उत्तरध्रुवयात्रां कृतवान्। २९ वर्षीयः साहसी न्यायवादी सः एकाकितया ५० दिनानि यावत् प्रयाणं कृत्वा एतस्मिन् वर्षे जनवरीमासे प्रथमसप्ताहे दक्षिणध्रुवयात्रां समापितवान्। अपेक्षितानि वस्तूनि कष्टेन वहन् सः प्रतिदिनं २६ कि.मी. यावत् प्रयाणं कुर्वन् १३१० कि.मी. दीर्घां यात्रां निश्चितात् अवधेः दशदिनेभ्यः पूर्वम् एव समापयन् लक्ष्यस्थानं प्राप्तवान्। एकाकितया दक्षिणध्रुवयात्रां कृतवान् एलिङ्ग् कागे एतत्क्षेत्रे अद्वितीयः!



# कर्तव्यपालनम्

कस्मिंश्चित् ग्रामे कश्चन अजपालः आसीत्। सः एकाकितया निवसति स्म। सः स्वभावेन नितरां सरलः। कदाचित् तेन नगरं प्रति गन्तव्यम् आपतितम्। किन्तु अजानां रक्षणार्थं तदीयः कोऽपि न आसीत्। अतः सः अजानां रक्षणस्य भारं भगवति आरोप्य नगरं प्रति प्रस्थितवान्।

अजपालः नगरमार्गेण गच्छन् आसीत्। मार्गे कश्चन परिचितः जनः मिलितः। सः अजपालं पृष्टवान्– "मित्र! कुत्र गच्छन् अस्ति भवान्?" इति।

"नगरे कानिचन वस्तूनि क्रेतव्यानि सन्ति। किन्तु साहाय्यकः कोऽपि नास्ति। अतः अहं स्वयम् एव प्रस्थितवान्" इति उक्तवान् अजपालः।

"तदस्तु, भवतः अजान् कः रक्षति?" इति पृष्टवान् सः ग्रामीणः।

"न कोऽपि। अहम् एकाकी खलु? अतः भगवति रक्षणभारम् आरोप्य आगतवान् अस्मि" इति उक्तवान् अजपालः।

'एवं वा? भगवान् भवतः अजान् कथं रक्षति इति पश्याम तावत्' इति मनसि एव उक्त्वा ततः निर्गतवान् सः ग्रामीणः। अनन्तरम् अजपालस्य अजानां गणतः उत्तमान् विंशतिम् अजान् अपहृत्य ततः निर्गतवान्।

अजपालः नगरात् प्रत्यागत्य यदा दृष्टवान् तदा विंशतिः अजाः अपहृताः सन्ति इति विषयं ज्ञातवान्। सः नितरां खिन्नः। इतः परम् अजानां रक्षणस्य भारः भगवति न आरोपणीयः इति निश्चितवान् सः।

ततः अजानां रक्षणार्थं सः उत्तमौ उभौ शुनकौ क्रीतवान्। शुनकविक्रेता अजपालतः अधिकं मूल्यं स्वीकृत्य उक्तवान् यत् प्रतिदिनं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

शुनकयोः निमित्तम् उभौ मूषकौ आहाररूपेण दीयेते चेत् पर्याप्तम् इति। अजपालः प्रतिदिनम् उभौ मूषकौ गृहीत्वा एकैकस्मै शुनकाय एकैकं मूषकं ददाति स्म।

शुनकयोः आगमनस्य अनन्तरम् अपि अजानां हानिः तु अनुवर्तते स्म। ततः अनतिदूरे अरण्ये केचन वृकाः आसन्। ते रात्रौ आगत्य अजान् गृहीत्वा नयन्ति स्म। शुनकौ एतत् दृष्ट्वा अपि मौनं तिष्ठतः स्म। वृकाः पूर्णोदरम् अजान् खादित्वा यदा निर्गच्छन्ति स्म तदा शुनकौ अवंशिष्टं मांसं खादतः स्म। एकः मूषकः तयोः उदरपूरणार्थम् अपर्याप्तः भवति स्म। अतः तौ एतेन क्रमेण उदरं पूरयतः स्म।

अजानां सङ्ख्यायां प्रतिदिनं ह्रासः जायमानः अस्ति इति ज्ञातवान् अजपालः। 'एवम् एव अनुवर्तते चेत् मत्समीपे एकः अपि अजः न अवशिष्येत' इति एवं चिन्तयतः तस्य दुःखम् उद्गतम्। नेत्राभ्याम् अश्रूणि आगतानि।

तावता कश्चन वृद्धः तत्र आगतः। सः अजपालं दृष्ट्वा पृष्टवान्– "वत्स! किं जातम्? का विपत् आगता? किमर्थं रोदनं भवतः?" इति।

"किम् अन्यत् करोमि, ऋते रोदनात्? भगवति अजरक्षणभारम् आरोप्य यदा गतं तदा विंशतिः अजाः चोरिताः। तथापि भगवता किमपि न कृतम्। ततः अजानां रक्षणार्थं मया द्वौ शुनकौ क्रीतौ। तथापि प्रयोजनं न सिद्धम्। प्रतिदिनं वृकाः द्वित्रान्



अजान् नयन्तः सन्ति। एतत् दृष्ट्वा अपि एतौ शुनकौ न भषतः अपि। सर्वं मम दौर्भाग्यस्य फलम्" इति खेदेन उक्तवान् अजपालः।

"वत्स! प्रतिदिनं शुनकयोः कृते आहारः कियत् दीयते?" इति पृष्टवान् सः वृद्धः।

"प्रतिदिनम् एकैकस्मै शुनकाय एकैकः मूषकः दत्तः चेत् पर्याप्तम् इति शुनकविक्रेता उक्तवान् अस्ति। अतः प्रतिदिनम् एकैकः मूषकः दीयते। किन्तु तावतः आहारस्य दानम् अपि व्यर्थम् एव इति भासते इदानीम्" इति उक्तवान् अजपालः।

"इदानीं मया सर्वं ज्ञातम्। आहारस्य अभावतः एष शुनकौ तथा व्यवहरतः। भवान् शुनकयोः कृते पूर्णोदरं मांसं ददातु। ततः पश्यतु तौ कथं व्यवहरतः इति। योग्यस्य आहारस्य दानं भवतः कर्तव्यम्। तत् कर्तव्यं भवान् पालयतु। तदा शुनकौ अपि स्वकर्तव्यं पालयतः" इति सूचितवान् वृद्धः।

तस्मात् दिनतः अजपालः शुनकयोः कृते प्रतिदिनं योग्यम् आहारं दत्तवान्। तदारभ्य अजानां सङ्ख्यायां ह्रासः सर्वथा स्थगितः।

शुनकयोः उदरं तु पूर्णम् आसीत् खलु? रात्रौ यदा वृकाः आगताः तदा तान् शुनकौ दृष्टवन्तौ। तान् दृष्ट्वा एकः शुनकः भषन् उक्तवान्– "गच्छन्तु भवन्तः। अस्माकं स्वामी पूर्णोदरम् आहारं यच्छन् अस्ति इदानीम्। अतः चौर्येण आहारः प्राप्तव्यः नास्ति" इति।

तदा अपरः शुनकः अवदत्– "मा गच्छन्तु मित्राणि। यथापूर्वम् आहारं स्वीकुर्वन्तु। अवशिष्टम् आवां खादावः" इति।

वृकाः किञ्चित्कालं चिन्तामग्नाः जाताः। शुनकौ इतः पूर्वं कदापि एवं न भषितवन्तौ आस्ताम्। परस्परविरुद्धं वचनं न उक्तवन्तौ आस्ताम्। तथापि इदानीं भषितं चेदपि आक्रमणं तु न कृतम् इत्यतः ते वृकाः अजानां समीपं गतवन्तः।

अनन्तरक्षणे एव शुनकौ वृकाणाम् उपरि आक्रमणं कृतवन्तौ। भषन्तौ तौ वृकान् दशन्तौ निर्दयं मारितवन्तौ।



# प्रकृतिवैचित्र्याणि–

## व्याघ्राणां विनाशः

गतदशकद्वयात् पूर्वं केन्द्रसर्वकारस्य व्याघ्ररक्षण-योजनायाः परिणामतः इदानीम् अस्माकं देशे १८ अभयारण्येषु ४३०० व्याघ्राः दृश्यन्ते, पूर्वं तु केवलं १८०० आसन्। किन्तु दौर्भाग्यं नाम अभयारण्ये अपि क्वचित् व्याघ्रमृगया प्रचलति इति श्रूयते। व्याघ्रमारणं न केवलम् अस्माकं देशे, अपि तु नेपालः, भूतान्, बांगलादेशः इत्यादिषु अपि प्रचलति। प्रपञ्चे आहत्य सप्ताष्टसहस्रं व्याघ्राः स्युः। तेषु ६०% व्याघ्राः अस्मदुपखण्डे स्थितेषु एव देशेषु भवन्ति।

गते डिसेम्बर्मासे परिसरविशेषज्ञाः देहलीनगरे प्रवृत्ते अन्ताराष्ट्रिये समावेशे एवम् उद्घोषितवन्तः यत् यदि व्याघ्रजातेः संरक्षणार्थम् अविलम्बेन योग्याः उपायाः न आश्रिताः भवेयुः तर्हि २०२० तमवर्षात् पूर्वं व्याघ्राः प्राणिसङ्ग्रहालयमात्रे द्रष्टुं शक्याः भवेयुः इति।

## नश्यमानः जीवराशिः

यथा व्याघ्रजातिः क्षीयमाणा अस्ति तथैव पक्षि-सर्प-कीटादयः, जलचराः, उभयचराः इत्यादयः १५० विधाः जीविनः अपि नाशावस्थाम् आपन्नाः सन्ति। तत्रापि सिंहः, गजः, चित्ररासभः, खड्गमृगः सिंहपुच्छः वानरः, इण्डस् डाल्फिन् च विनाशतीरे एव सन्ति इति विज्ञानिनः वदन्ति। एते जीविनः समग्रदेशे सन्ति। अतः एतत् तु सुस्पष्टं यत् जीविनाशः केषुचित् प्रदेशेषु न, अपि तु समग्रे देशे प्रचलति इति। यदि वयं प्रकृत्यनुकूलं जीवनं यापयेम तर्हि एषः विनाशः निवारितः भवेत् इति अभिप्रयन्ति विज्ञानिनः।

## द्विधा अभिप्रायः

पूर्वं डिनोसार्पदवाच्याः राक्षसगोधिकाः समग्रे प्रपञ्चे तत्र तत्र वसन्ति स्म। किन्तु कालान्तरे ते एतस्मात् लोकात् एव अदृश्यतां गताः। एतस्याः घटनायाः कारणं द्विधा वर्णयन्ति विज्ञानिनः। केचन विज्ञानिनः वदन्ति– ४०,००,००० वर्षेभ्यः पूर्वम् अग्निपर्वतस्फोटात् शिलारसः उद्गतः, तेन रसेन समग्रा पृथिवी व्याप्ता, ततः राक्षसगोधिकाः विनाशं गताः इति। मेक्सिकोप्रदेशे १७० की.मी. विस्तीर्णा ज्वालामुखभूमिः दृष्टिगोचरा जाता अस्ति। एतस्य दर्शनस्य अनन्तरम् एवम् ऊह्यते यत् अन्तरिक्षात् आगतः कश्चन ग्रहः धूमकेतुः वा भूम्या यदा घट्टितः तदा एषा ज्वालामुखभूमिः सृष्टा इति। अन्ये केचन विज्ञानिनः एवम् अभिप्रयन्ति यत् ६५०,००,०००




वर्षेभ्यः पूर्वं यदा अन्यग्रहस्य घट्टनं जातं तदा ७०% जीविनः विनाशं गताः। तदैव राक्षसगोधिकाः अपि विनाशं प्राप्तवत्यः इति। पूर्वं जीवनाशस्य कारणं प्राकृतिकः विकोपः आसीत्, इदानीं तु मानवः एव जीविनां विषये अनादरेण क्रूरतया च व्यवहरन् जीविनः नाशयन् अस्ति।

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां जुलै-९३ मासे प्रकटयिष्यामः।


M. Natarajan


Devidas Kasbekar

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **सहजमेतत्, अजे मनुजस्य वात्सल्यम्।**

द्वितीयचित्रम् - **सहजमेतदपि, मनुजे गजस्य दाक्षिण्यम्।**

प्रेषिका - श्रीमती ए.आर्. विजयश्रीः, टागोर् मार्गः, जोदेपल्लिगुडम्-५३४१०२ (आ.प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 252.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 252.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.






मिठाई में
नारियल
मुँह में
हलचल




nutrine
COOKIES





बच्चे झूमें-गायें, मौज मनायें
कोकानाका कुकीज




Visesh/NC/9090/Hin